# अथ प्रायश्चित्तेंदुशेखरस्यानुक्रमणिका प्रारभ्यते ।


| विषयाः | प | विषयाः | प | विषयाः | प | विषयाः | प. |
|---|---|---|---|---|---|---|---|
| मंगलाचरणम् | १ | मलिनीकरणानि | २ | अथकृच्छ्रादिनिर्णयः | ३ | कृष्णलास्वरूपम् | " |
| प्रायश्चित्तलक्षणम् | " | उपपातकानि | " | नक्तव्रतलक्षण तत्प्रत्याम्नायः | " | मापकस्वरूपम् | " |
| पर्षत्प्रमाणम् | " | महापातकानि | " | उपवासलक्षणतत्प्रत्याम्नायः | " | पणस्वरूपम् | " |
| पर्षद्दक्षिणानियमः | " | महापातकसदृशान्युपपातकानि | " | प्रायश्चित्ते सकल्पः | ४ | स्वर्णादिमानव्यवस्था | " |
| पापिकृत्यम् | " | ब्रह्मवधसमानि | " | प्राजापत्यस्वरूपम् | " | कृच्छ्रप्रत्याम्नायः | " |
| प्रायश्चित्तकथननियमः | " | सुरापानसमानि | " | ग्रासप्रमाणम् | " | पादोनकृच्छ्रस्वरूपम् | " |
| बालवृद्धयोर्लक्षणम् | " | स्वर्णस्तेयसमानि | " | अव्रतघ्नानि | " | कृच्छ्रार्धस्वरूपम् | " |
| अवस्थाविशेषप्रायश्चित्तम् | " | गुरुतल्पसमानि | " | प्राजापत्याशक्तौदानम् | " | पादकृच्छ्रमिदमेवाशिशुकृच्छ्रम् | " |
| प्रकीर्णकपापानि | २ | इत्यनुपातकानि | " | तदभावे मूल्यम् | " | वर्णक्रमेणपादकृच्छ्राः | " |
| जातिभ्रंशकराणि | " | अतिपातकानि | ३ | गोमूल्यप्रमाणानिष्कलक्षणम् | " | अतिकृच्छ्रलक्षणम् | ५ |
| [illegible]रीकरणानि | " | अथकर्मविपाकः | " | आढ्यादीनांगोमूल्यम् | " | कृच्छ्रातिकृच्छ्रः | " |
| [illegible]त्रीकरणानि | " | कर्मविपाकजन्यजन्मानि | " | पुराणलक्षणम् | " | तप्तकृच्छ्रः | " |

| विषयाः | प |
|---|---|
| यज्ञोपवीतविनाभोजनेऽवुपानेवाप्रायश्चित्तम् | १० |
| यज्ञोपवीतविनामूत्राद्युत्सर्गेप्राय० | ” |
| जलेस्वप्रतिविंवदर्शनेप्राय० | ” |
| शय्यारूढादीनामभिवादनेप्राय० | ” |
| आह्निकविच्छेदेप्राय० | ” |
| निमंत्रितस्यभोजनाद्यदानेप्रा | ” |
| दडचोत्सर्गेप्रायश्चित्तम् | ” |
| अदडचदडनेप्रायश्चित्तम् | ” |
| दुःस्वप्नारिष्टदर्शनेप्राय० | ” |
| नीलीवस्त्रादिधारणेप्राय० | ११ |
| क्षत्रियाद्यभिवादनेप्राय० | ” |
| प्रतिमादिभेदनेप्राय० | ” |
| पर्वण्यादौमैथुनेप्राय० | ” |
| रजस्वलास्वस्त्रीगमनेप्रा० | ” |
| चरमधातुविसर्जनेप्राय | ” |
| वमनेप्रायश्चित्तम् | ” |

| विषयाः | प. |
|---|---|
| दिवास्वापादौप्रायश्चित्तम् | ११ |
| गर्भाधानादिसंस्कारलोपेप्रा० | ” |
| सवत्सरनित्यक्रियालोपेप्रा० | ” |
| निषिद्धकाष्ठैर्दंतधावनेप्रा० | ” |
| प्रमादाद्व्रतभंगेप्रायश्चित्तम् | ” |
| विप्रस्यक्षत्रवृत्त्याधनार्जनेप्रा० | ” |
| स्त्रीधनोपजीवनेप्राय० | ” |
| भार्यायामुखमैथुनेप्रा० | ” |
| गोयुक्तयानस्थमैथुनेप्रा० | ” |
| देवागारशिलादिनास्यगृहकरणेप्राय० | १२ |
| गुरुप्रतिश्रुतवस्त्वपकरणेप्रा० | ” |
| भोजनकालेगृहीतमौनत्यागेप्रा० | ” |
| श्राद्धोपवासादिषुदिनेपुदतधावनेप्रायश्चित्तम् | ” |
| कन्यायाविवाहात्प्राग्रजोदर्शनेप्रा० | ” |
| सुरापात्रगधाघ्राणेप्रा० | ” |
| मादरापानादौप्रायाश्चित्तम् | ” |

| विषयाः | प |
|---|---|
| चांडालादिस्पर्शेप्राय० | १२ |
| अमेध्यादिस्पर्शेप्राय० | ” |
| अब्राह्मणसमीपभोजनेप्राय० | ” |
| शूद्रपक्तौभोजनेप्राय० | ” |
| उच्छिष्टस्पर्शेप्रायश्चित्तम् | ” |
| ऊर्ध्वोच्छिष्टस्यश्वकाकादिविष्ठास्पर्शेप्राय० | १३ |
| चाडालादिहस्तपाचितभोजनेप्राय० | १४ |
| चाडालादिस्पृष्टाबुपानेप्रा० | ” |
| शूद्रोदकपानेप्राय० | ” |
| रजस्वलादिस्पृष्टाभोजनेप्राय० | ” |
| मार्जाराद्युच्छिष्टभोजनेप्राय० | ” |
| चाडालपुल्कसादिस्पर्शेप्रा० | १५ |
| चांडालादिएकशाखारोहणेप्रा० | ” |
| चांडालाद्येकपथगमनेप्रा० | ” |
| चांडालादेःस्ववेश्मन्यवस्थानेप्रा० | ” |
| रुद्रनिर्माल्यस्पर्शेप्राय० | ” |

| विषयाः | प |
|---|---|
| शैवसौरनिर्माल्यभक्षणेप्रा० | १५ |
| प्रेतानुगमनेप्राय० | १६ |
| रजस्वलयोःपरस्परस्पर्शेप्रा | ” |
| रजस्वलायाश्चांडालादिस्पर्शेप्रायश्चि० | ” |
| चाडालादिस्पर्शोत्तररजोदर्शनेप्रायश्चित्तम् | १७ |
| रजस्वलासूतिकयोर्मरणेप्रा० | ” |
| मलिनीकरणप्राय० | ” |
| तत्रजातिभ्रंशकरेषुप्राय० | ” |
| संकलीकरणापात्रीकरणयोःप्रा० | ” |
| अथोपपातकप्रायश्चित्तम् | ” |
| गोवधेप्रायश्चित्तम् | १८ |
| पंचविधत्वनिर्णयः | १९ |
| कर्तृलक्षणम् | ” |
| प्रयोजकलक्षणम् | ” |
| अनुग्राहकलक्षणम् | ” |
| अनुमन्तृलक्षणम् | ” |

॥ श्रीगणेशायनमः ॥ श्रीसीतारमणायनमः ॥ बालेंदुशेखरंनत्वाबालबोधायलिख्यते ॥ बालकृष्णमुदेचापिप्रायश्चित्तेंदुशेखरः ॥ १ ॥
यद्यथाविध्यनुष्ठानाद्धुपाचिताशुभनाशकमेवतत्प्रायश्चित्तम् ॥ तुलापुरुषादावतिव्याप्तिवारणायएवेति ॥ नतुपापांतरजनकमित्यर्थः ॥ पा
पनिवर्त्तनक्षमधर्मविशेषेयोगरूढोयंशब्दइतितत्त्वम् ॥ संकेतविशेषसंबंधेनप्रायश्चित्तशब्दवत्त्वमेवप्रायश्चित्तत्वम् ॥ अतएवकृत्वंगभ्रे
षप्रायश्चित्तेतद्व्यवहारइत्यन्ये ॥ पापिनःप्रायश्चित्तंनित्यंनैमित्तिकंवेत्यतोविकलांगादपिपापस्यनाशः ॥ किंत्वल्पस्यैवनतुसमग्रस्यएवंचका
म्यमप्येतत् ॥ एवंचप्रधाननिष्पत्तावपिनप्रधानवृत्तिरितिबोध्यम् ॥ एकप्रायश्चित्तकनानापापकर्मणांतत्प्रायश्चित्तैकप्रयोगेणैवनाशः ॥ एवमं
धिकपापनाशार्थमुक्तेनैकवारमनुष्ठितेनन्यूननाशस्यापिपापांतरस्यनाशः ॥ एवंयत्रयत्प्रायश्चित्तमुपदिष्टंतदन्यूनक्लेशकप्रायश्चित्तांतरमपित
त्रयोज्यम् ॥ पापिनांतदुपदेशश्चपुण्याय ॥ सचाचिंतनपृष्टेनैवविदुषासंसदिधर्मशास्त्रादिबुद्ध्वैवकार्यः ॥ अन्यथोपदेष्टाप्रत्यवैति ॥ संसच्च
तुर्भिस्त्रिभिर्वाधर्मशास्त्रादितत्त्वज्ञैर्भवति एकेनापिब्रह्मविदायतिवर्ज्यम् ॥ सहस्राद्येकपर्यंतमित्यन्ये ॥ पर्षद्दक्षिणाचलक्षगवादिकिंचिद्देयप
र्यंता ॥ यथायोग्यंकृच्छ्रसंख्ययावा ॥ पर्षत्तुष्टिर्वा ॥ गौर्वृषभश्चेत्यन्ये ॥ निवेदितदोषस्यपर्षदनुमत्यैवप्रायश्चित्तानुष्ठानंबोध्यम् ॥ पापीच
सचैलंस्नातोवाग्यत आर्द्रवासाउपदेष्टारंसाष्टांगंप्रणम्यस्पष्टाभिधानंवदेदिदंमेपापंनिष्पन्नंप्रायश्चित्तंमेउपदिशत्विति ॥ पापंकृतवतः [illegible] परै
र्ज्ञातदोषस्यचसभोपस्थानंविनाभोजनभाषणेचपापवृद्धिः ॥ आसंवत्सरंप्रायश्चित्ताकरणेपापद्वैगुण्यम् ॥ आर्त्तस्यप्रायश्चित्ताक
थनेचितस्यविपश्चितस्तत्पापभागिताअज्ञात्वाकथनेच] ॥ शूद्रादेस्तुप्रायश्चित्तोपदेशोविप्रमंतराकृत्वाकार्यः ॥ क्षत्रियवैश्ययोरप्येवम् ॥

ज्यः ॥ तत्रपापानिप्रकीर्णकजातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणोपपातकमहापातकानुपातकरूपाणिविहिताकरणेंद्रियानिग्रहे
भ्योभवंति ॥ तत्रजातिभ्रंशकरादिगणितातिरिक्तंप्रकीर्णकम् ॥ जातिभ्रंशकराणितु ॥ विप्रपीडाकरणमनाघ्रेयमद्यलशुनादिघ्राणंमित्रकौटि
ल्यंपुंसिमैथुनमेतानिजातिभ्रंशकराणि ॥ संकरीकरणानितु ॥ खराश्वोष्ट्रमृगहस्त्यजाविमीनमहिषाणामन्येषांचग्राम्यारण्यपशूनांवधः संक
रीकरणानि ॥ अपात्रीकरणानितु ॥ निंदितेभ्योधनादानंवाणिज्यंशूद्रसेवाकुसीदजीवनमसत्यभाषणमेतान्यपात्रीकरणानि ॥ मलिनीक
रणानितु ॥ बहुकृमिकीटकयोर्जलस्थलजयोर्हत्यामद्यानुगतभोजनंबहुफलैधः पुष्पस्तेयमधैर्यमेतानिमलिनीकरणानि ॥ उपपातकान्याह ॥
गोवधः १ व्रात्यता २ स्तेयम् ३ ऋणानपक्रिया ४ अनाहिताग्निता ५ अपण्यविक्रयः ६ परिवेदनम् ७ भृतकाध्ययनाध्यापने ८ पार
दार्यम् ९ पारिवित्त्यम् १० वार्धुष्यम् ११ लवणक्रिया १२ स्त्रीशूद्राविट्क्षत्रवधः १३ अशुष्कद्रुमच्छेदनम् १४ निंदितार्थोपजीवनम् १५
नास्तिक्यम् १६ व्रतलोपः १७ सुतविक्रयः १८ धान्यकुप्यपशुस्तेयम् १९ अयाज्ययाजनम् २० पितृमातृसुतत्यागः २१ तडागारामविक्रयः
२२ कन्यादूषणम् २३ परिवेदकयाजनम् २४ तस्यकन्याप्रदानम् २५ गुरोरन्यत्रकौटिल्यम् २६ आत्मार्थपाकार्थक्रिया २७ मद्यस्त्रीनिषे
वणम् २८ व्रतलोपः २९ स्वाध्यायाग्निसुतानांत्यागः ३० बांधवत्यागः ३१ स्त्रियाहिंसयाचौषधेनचजीवनम् ३२ हिंसकप्रवर्त्तनम् ३३ द्यूता
दिव्यसनम् ३४ आत्मविक्रयः ३५ शूद्रप्रेष्यता ३६ हीनसख्यम् ३७ हीनयोनिनिषेवणम् ३८ अनाश्रमित्वम् ३९ परान्नपुष्टता ४० असच्छा
स्त्राभिगमनम् ४१ आकराधिकारः ४२ भार्यादिविक्रयः ४३ असत्प्रतिग्रहः ४४ निंदितान्नादनम् ४५ नटादिकर्मकरणम् ४६ भार्यात्यागः ४७॥

मातृगमनंस्वसृस्नुषयोर्गमनमित्यतिपातकानीतिगौडनिबंधेषु ॥ पापिनःपंचधा ॥ साक्षात्कर्त्रनुग्राहकप्रयोजकानुमंतृनिमित्तकर्तृभेदात् ॥
१ साक्षात्कर्तुः पालनादिनोपकारकोनुग्राहकः २ आज्ञापयिताभ्यर्थयितोपदेष्टाचप्रयोजकः ३ स्वार्थंपरार्थंवानुमतिकर्तानुमंता ४ अनिमित्तं
भर्त्सनताडनधनहरणादिनाक्रोपंजनयंस्तन्मरणेनिमित्तंभवेत्सानिमित्तकर्त्ता ५ एषूत्तरोत्तरमल्पदोषत्वंप्रायश्चित्तालपत्वंचबोध्यम् ॥ पापिनां
प्रायश्चित्ताकरणेऽन्यजन्मनिदेहप्राप्तिः पापिनांप्रायश्चित्तोन्मुखत्वायजन्मांतरभाविनःकर्मविपाकाःकतिचिदुच्यंते ॥ अज्ञानतोब्रह्महाश्वशूक
रोष्ट्राणांक्रमेणयोनिमेति ॥ सुरापःखरपुल्कसवेनानाम् ॥ स्वर्णस्तेयीविड्जातकृमिकीटपतंगपक्षिहिंस्रत्ववताम् ॥ स्वर्णस्तेयीऊर्णनाभकृ
कलासतिरश्चांपशुपक्ष्यादीनांचद्योचारिणांचहिंस्राणांपिशाचानांसहस्रशोयोनिंयाति ॥ गुरुतल्पगस्तृणगुल्मलतानांक्रव्यादानांक्रूरकर्मणां
च ॥ तत्संयोगीचतद्वत् ॥ परस्त्रीहारीद्रव्यहारीचनिर्जलारण्येब्रह्मराक्षसः ॥ अनध्यायाध्यायीदुष्प्रतिग्राहीचसृगालः ॥ अन्नरत्नयोर्हर्ता
अजीर्णव्याधिरतिदारिद्रोवा ॥ वेदवाग्वेदपुस्तकानांचोरोमूकः ॥ पत्रशाकयोर्मयूरः ॥ हेमरत्नानांहेमकारपक्षीअतिदारिद्रोवा ॥ न्यासस्य
अनपत्योधनहीनश्च ॥ सुगंधानांछुच्छुंदरी ॥ धान्यानांमूषकः ॥ तिलानांतैलस्यचतैलपायीकीटः ॥ परस्वहृत्नानातिर्यग्हुतंहविर
श्नन्हरन्वाश्वाअतिदुःखीवा ॥ यानंहरन्नुष्ट्रः ॥ फलंकपिः ॥ जलंजलप्लवःपक्षीमत्स्योवा ॥ क्षीरंकाकोबलाकोवा ॥ गृहोपस्करंगृहकारी
कीटः ॥ मधुहरन्दंशकःकीटः ॥ मांसंगृध्रः ॥ गांगोधासर्पोवा ॥ अग्निंबकः ॥ वस्त्रंकुष्ठीपतंगोवा ॥ रसंश्वा ॥ लवणंचीरीउच्चैःस्वरः
कीटः ॥ तैजसंमंडली ॥ गोब्राह्मणदेवस्वंपांडुरोगी ॥ न्यासंकाणोऽनपत्योवा ॥ शय्यांक्षपणकः ॥ शंखंशुक्तिंवाकपाली ॥ दीपंकौशिकः ॥

स्नेहंक्षयी ॥ पशुंपरप्रेष्यः ॥ यद्धरतितत्तत्प्रकारकःप्राणीताद्दिकलोवाभवति ॥ ब्राह्मणीगामीनिर्बीजी ॥ मातरंसुपांवागच्छन्नातत्रपणः ॥ चांडा
लींपुल्कसींवाऽजगरः ॥ प्रव्राजितांमरुपिशाचः ॥ शूद्रींदीर्घकीटः ॥ सवर्णांदरिद्रः ॥ राजस्त्रियंनपुंसकः ॥ गांगच्छन्मंडूकः ॥ पिशुनो
दुर्गंधनासिकः ॥ सूचकोदुर्गंधास्यः ॥ देवब्राह्मणक्रोशकःखलतिः ॥ गरदाग्निदावुन्मत्तो ॥ गुरुंप्रतिहंताऽपस्मारी ॥ गोघ्नश्चांधः ॥ धर्मं
पत्नींत्यक्त्वाऽन्यत्रप्रवृत्तःशब्दवेधीप्राणी ॥ कुंडाशीभगभक्षकः ॥ स्त्रीपण्यजीवीपंढः ॥ कौमारदारत्यागीदुर्भगः ॥ मिष्टैकाशीवानरोवा
तगुलमीवा ॥ अभक्ष्यभक्षकोगंडमाली ॥ क्रूरकर्माराक्षसः ॥ मित्रध्रुक्क्षयी ॥ मातापित्रोरनृतवाक्स्खलद्वीः ॥ कूटसाक्षीउच्छिन्नजंघा
चरणः ॥ विवाहविघ्नकर्ताछिन्नोष्ठः ॥ विप्रावगूरणेछिन्नहस्तः ॥ चतुष्पथेविण्मूत्रोत्सर्गेमूत्रकृच्छ्री ॥ कन्यादूषकःपंढः ॥ ईर्ष्यालुर्मशकः ॥
पित्रादिविवदमानोपस्मारी ॥ विद्याविक्रयीपुरुषोमृगः ॥ वेदविक्रयीद्वीपी ॥ बहुयाजकोजलप्लवः ॥ अयाज्ययाजकोवराहः ॥ अनि
मंत्रितभोजीवायसः ॥ इतस्ततोऽश्नन्मार्जारः ॥ कक्षवनदाहीखद्योतः ॥ दारकाचार्यामुखदुर्गंधिः ॥ पर्युषिताशीकृमिः ॥ अदत्तादायी
बलीवर्दः ॥ मत्सरीभ्रमरः ॥ अग्न्युत्सादीमंडलकुष्ठी ॥ शूद्राचार्यःश्वपाकः ॥ वार्धुषिकोंगहीनः ॥ अपण्यविक्रयीगृध्रः ॥ राजकोशको
गर्दभः ॥ मत्स्यवेधीगर्भवासी ॥ आचार्यभार्यागामीभगंदरी ॥ भृतकाध्यापकोर्शोरोगी ॥ तीर्थेमूत्राद्युत्सर्गंकरश्चेत्यन्यत्राविस्तरः ॥ स्त्रीणा
मप्येतद्दोषपुतत्तज्जातीयस्त्रीत्वम् ॥ अथकृच्छ्रादिनिर्णयः ॥ दिनंविलंघ्यरात्रौसार्धयामाभ्यंतरेमितभोजनेनक्तव्रतम् ॥ तदशक्तोगुंजद्वयप
रिमितरूप्यमाषकदानम् ॥ तदभावेतन्मूल्यम् ॥ दिवारात्रमभोजनमुपवासः ॥ तदशक्तोरूप्यमाषत्रयदानम् ॥ एकविप्रभोजनंवा ॥ सद्द

स्रगायत्रीजपोवा ॥ द्वादशप्राणायामावा ॥ प्रायश्चित्तेसंकल्पः ॥ अद्येत्यादिअमुकगोत्रोऽमुकशर्माऽमुककर्मजन्यपापक्षयकामोनक्तव्रतंकरि
ष्ये ॥ तदशक्तौप्रतिनिधिरूपमिमंरौप्यमाषकंचंद्रदैवत्यममुकनाममोत्रायविप्रायाहंसंप्रददइति ॥ इदंमूल्यंविष्णुदैवत्यमितिवासंकल्प्यदानं
विप्रंचसंपूज्यद्रव्यमालभ्यसंप्रोक्ष्यदद्यात् ॥ प्राजापत्यंतु ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहंपरंचनाश्नीयात्प्राजापत्यःसउ
च्यते ॥ सायंद्वाविंशतिर्ग्रासाःप्रातःषड्विंशतिस्तथा ॥ अयाचितेचतुर्विंशतिःसायंद्वादशप्रातःपंचदशेतिवा ॥ ग्रासस्तु ॥ कुक्कुटांडप्रमाणोयावा
न्वामुखंप्रविशेत् ॥ अत्रशक्त्याव्यवस्था ॥ उपवासस्तुफलादिद्वाराकार्यः ॥ अष्टैतान्यव्रतघ्नानिआपोमूलंफलंपयः ॥ हविर्ब्राह्मणकाम्याच
गुरोर्वचनमौषधामित्युक्तेः ॥ परंतुपरिमितमेवेतिगौडाः ॥ इदमपिनेत्यपरे ॥ यद्वाक्रमेणैकभक्तनक्तायाचितोपवासाः ॥ एवंत्रिरावृत्तिः ॥
इदंषडुपवाससमम् ॥ तदशक्तौपयस्विन्याधेनोर्दानम् ॥ तदभावेगोमूल्यम् ॥ गोमूल्यंतु ॥ गवामभावेनिष्कंस्यात्तदर्धंपादमेववेति ॥
निष्कंतु ॥ सुवर्णचतुष्टयसमतोलितंरूप्यंनिष्कम् ॥ रूप्यपरिमाणेनिष्कंसुवर्णाश्चत्वारइतियाज्ञवल्क्यात् ॥ धेनुःपंचभिराढ्यानांमध्यानां
त्रिपुराणिका ॥ कार्षापणैकमूल्यापिदरिद्राणांप्रकीर्तितेतिषट्त्रिंशन्मते ॥ पंचभिःपुराणैरितिशेषः ॥ पुराणश्चषोडशमाषपरिच्छिन्नंरज
तम् ॥ कृष्णलातु ॥ रक्तिकाख्यगुंजापरिमिताकृष्णला ॥ मासकंतु ॥ तद्द्वयपरिमितंरूप्यंरूप्यमासकम् ॥ यद्वापणषोडशकंपुराणः पुराण
एवकार्षापणशब्देनकार्षिकशब्देनचोच्यते ॥ पणस्तु ॥ अशीतिरक्तिकापरिमितंताम्रमशीतिर्वराटिकावा ॥ ताम्रपणएवकर्षउच्यते ॥
रौप्यःपुराणोदक्षिणस्यांपणैःपूर्वस्यामितिव्यवस्था ॥ वृषेषट्कार्षापणादेयाः ॥ पंचेतिशूलपाणिः ॥ केवलगोमूल्यंतुपुराणत्रयमुत्तमःपक्षः ॥

द्वात्रिंशत्पणामध्यमः ॥ एकपुराणोधमइतिगौडाः ॥ दशकार्षापणाधेनोरश्वेपंचदशैवतु ॥ द्वात्रिंशत्पणिकागावोह्यष्टवानतुहीनता ॥ इतितु
प्रायश्चित्तातिरिक्तदक्षिणाप्रसंगेनधनवतोबोध्यम् ॥ प्रसंगात्स्वर्णमानव्यवस्थाप्युच्यते ॥ गुंजापरिमितकृष्णलापंचकंस्वर्णमाषः ॥ षोड
शमाषाअक्षशब्देनसुवर्णशब्देनकर्षशब्देनबिस्तशब्देनचोच्यंते ॥ सुवर्णाश्चत्वारःपलंनिष्कश्च ॥ दशपलानिधरणमितिमनुस्मृतौ ॥ साष्टेश
तेसुवर्णानांहेम्नुरोभूषणेपले ॥ दीनारेपिचनिष्कोस्त्रीत्यमरः ॥ राजतःपुराणोधरणइत्युच्यते ॥ दशभिर्धरणैःराजतंशतमानमित्युच्यते ॥
तदेवराजतंपलमप्युच्यतइति ॥ पलशतंतुला ॥ तुलाविंशतिकंभारः ॥ आचितोदशभारः ॥ सएवशाकटइत्युच्यते ॥ धेनुमूल्यसमंमूल्यंभू
धनधान्यवस्त्रस्वर्णरूप्यादिवादद्यात् ॥ गायत्र्ययुतजपोवाकृच्छ्रस्थानेप्रत्याम्नायः ॥ गायत्र्याद्वादशाधिकसहस्रसंख्यकःसामिद्घृतहविर्धा
न्यानामन्यतमस्यहोमोवा ॥ तिलहोमस्तुसहस्रएवेतिकेचित् ॥ घृताहुतिशतद्वयंवा ॥ वेदसंहितापारायणंवा ॥ प्राणायामशतद्वयंवा ॥ द्वाद
शविप्रभोजनंवा ॥ एकोपवासपूर्वकंद्वादशतिलपात्रदानंवा ॥ तीर्थोद्देशेनयोजनगमनंवा ॥ रुद्रैकादशिनीवा ॥ शिरःशोपणपूर्वकंद्वादश
सांगस्नानानिवाप्राजापत्यमेवकृच्छ्रः ॥ पादोनकृच्छ्रंतु ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहमुपवासइति ॥ अत्रचतुःपणाधिक
कार्षापणद्वयमशक्तौदेयम् ॥ एकभक्तायाचितोपवासपादैरेतादितिस्मृत्यर्थसारे ॥ कृच्छ्रार्द्धंतु ॥ सायंप्रातस्तथैवैकंदिनद्वयमयाचितम् ॥
त्र्यहमुपवासः ॥ अयाचितोपवासपादाभ्यामितिस्मृत्यर्थसारे ॥ इदंसार्धकार्षापणसममितिगौडाः ॥ पादकृच्छ्रंतु ॥ एकैकादिनक्रमेणादि
नचतुष्टयम् ॥ इदंद्वादशपणसमम् ॥ इदमेवशिशुकृच्छ्रम् ॥ विप्रादिवर्णक्रमेणोपवासत्रयायाचितत्रयनक्तत्रयैकभक्तत्रयरूपाःपादकृच्छ्रइत्या

परस्तंबः ॥ अयमेवातिकृच्छ्रःस्यात्पाणिपूरान्नभोजनैः ॥ अत्रयेषुनक्तादिदिनेषुभोजनंतेषुपाणिपूरान्नता ॥ नवाहमेकैकग्रासोत्यत्रिदि
नमुपवासोतिकृच्छ्रइतिमनुः ॥ अत्रप्राजापत्यत्रयमितिचतुर्विंशतिमते ॥ कृच्छ्रातिकृच्छ्रःपयसा दिवसानेकाविंशतिः ॥ पयोऽत्रजलम् ॥
तच्चसायंप्रातर्मध्याह्नेषुपेयम् ॥ द्विगुणोतिकृच्छ्रएवकृच्छ्रातिकृच्छ्रइतियमः ॥ तेनायंषट्प्राजापत्यसमः ॥ तप्तकृच्छ्रंतु ॥ तप्तकृच्छ्रंचर
न्विप्रोघृतक्षीरघृतानिलान् ॥ प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायीसमाहितः ॥ उष्णोदकान्निर्गतस्यबाष्पस्यपानमुष्णानिलपानम् ॥ एत
च्चगात्रपूरणमात्रपर्यंतम् ॥ उष्णादंगाराद्वा ॥ तत्रषट्पलमंबु ॥ त्रिपलंक्षीरम् ॥ एकपलंघृतम् ॥ एषएवशीतैःशीतकृच्छ्रः ॥ अत्रधेनुत्रयमि
तिषट्त्रिंशन्मते ॥ अतिकृच्छ्रतप्तकृच्छ्रयोर्धेनुद्वयमित्यपरार्कभवदेवौ ॥ धेनुचतुष्टयमितिशूलपाणिः ॥ तप्तक्षीरघृतांबूनामेकैकंप्रत्य
हंपिबेत् ॥ एकरात्रोपवासश्चतप्तकृच्छ्रमुदाहृतमिति ॥ अपरस्तप्तकृच्छ्रः ॥ अत्रैकाधेनुः ॥ पर्णकृच्छ्रंतु ॥ पर्णोदुंबरराजीवबिल्वपत्रकुशोद
कैः ॥ प्रत्येकंप्रत्यहंपीतैः पर्णकृच्छ्रउदाहृतः ॥ एषांपक्वोदकैरित्यर्थः ॥ पर्णःपलाशः ॥ राजीवंपद्मम् ॥ अयंपंचाहसाध्यःसार्धोप
वासद्वयतुल्यः ॥ त्रिरात्रोपवासांतेपलाशादिपंचकक्वाथोदकपानेपरःपर्णकृच्छ्रः ॥ चतुर्दश्यामुपोष्यपरेद्युःपूर्णिमायांपंचगव्यपानेनब्रह्मकू
र्चः ॥ पंचगव्यप्रमाणंतु ॥ तत्र गोमूत्रंकृष्णवर्णायाःश्वेतायाश्चैवगोमयम् ॥ पयश्चताम्रवर्णायारक्तायागृह्यतेदधि ॥ कपिलायाघृतंग्रा
ह्यंसर्वंकापिलमेववा ॥ मूत्रमेकपलंदद्यादंगुष्ठार्धंतुगोमयम् ॥ क्षीरंसप्तपलंदद्याद्दधित्रिपलमुच्यते ॥ घृतमेकपलंदद्यात्पलमेकंकुशोदकम् ॥
एतच्चगायत्र्यागोमूत्रमित्यादिसमंत्रकंकार्यम् ॥ पंचगव्यपानंचभोजनस्थाने ॥ अत्रार्धाधेनुः ॥ अत्रहोमोप्यास्ति ॥ पंचगव्यहोमश्चसप्त

पत्रैरच्छिन्नाग्रैःकुशैरिरावतीइदंविष्णुर्मानस्तोकोविंशतिऋग्भिःकार्यः ॥ हुतशेषंप्रणवेनालोड्यप्रणवेनगृहीत्वामध्यमपलाशपत्रेणस्वर्णपात्रेण
ताम्रपात्रेणवाब्रह्मतीर्थेनपिबेत् ॥ एषद्विरात्रःसांतपनकृच्छ्रइतिस्मृत्यर्थसारे ॥ पराकस्तुद्वादशरात्रोपवासः ॥ अत्रपंचधेनवइतिशूलपा
णिः ॥ द्वेइत्यपरार्कमदनदेवौ ॥ तिस्रइतिषट्त्रिंशन्मतम् ॥ सौम्यकृच्छ्रस्तु ॥ पिण्याकाचामतक्रांबुसक्तूनांप्रतिवासरम् ॥ एकरात्रोप
वासश्चसौम्यकृच्छ्रोयमुच्यते ॥ पिण्याकंतिलपिंडः ॥ आचामओदनस्रावः ॥ तक्रंजलंसक्तवश्चक्रमेणपंचदिनेषु ॥ षष्ठेह्न्युपवासः ॥ अत्रैकाधे
नुरितिकेचित् ॥ अर्धोचिता ॥ पिण्याकंसक्तवस्तक्रंचतुर्थेह्न्यभोजनम् ॥ वासोवैदक्षिणांदद्यादित्यपरःसौम्यकृच्छ्रः ॥ अत्रोभयत्रप्रा
णयात्रामात्रनिर्वाहक्षमंपिण्याकादिग्राह्यम् ॥ पीण्याकादीनांपंचानांप्रत्येकंत्रिरात्रोपयोगाभ्यासेपंचदशादिनस्तुलापुरुषः ॥ पिण्याकादिपंचा
नामेकैकदिनोपयोगोत्तरंत्रिरात्रमुपवासेऽष्टदिनसाध्यस्तुलापुरुषः ॥ एषांपंचानामेकैकस्यत्र्यहंभोजनेत्र्यहंद्वयंवायुभक्षणेचैकविंशतिरात्रसा
ध्यः सः ॥ वारुणकृच्छ्रस्तु ॥ मासंपरिमितसक्तूदकपानेवारुणकृच्छ्रः ॥ श्रीकृच्छ्रस्तु ॥ त्र्यहंपिबेत्तुगोमूत्रंत्र्यहंवैगोमयंपिबेत् ॥ त्र्यहंयावकमेष
श्रीकृच्छ्रः ॥ यावककृच्छ्रः ॥ यवानामप्सुसाधितानांसप्तरात्रंपक्षंमासंवाप्राशनेयावककृच्छ्रः ॥ जलकृच्छ्रस्तु ॥ अनशनोजलस्थोऽहोरात्रांक्षिपे
देषजलकृच्छ्रः ॥ उदकसक्तूनांमासाभ्यवहारेणापरः ॥ बिल्वैर्वाफलकैर्वापिपद्माक्षैरथवाशुभैः ॥ मासाशनेनश्रीकृच्छ्रःकथ्यतेचद्विजोत्तमैः ॥
वज्रकृच्छ्रस्तु ॥ गोमूत्रयावकपानेएकोवज्राख्यःकृच्छ्रः ॥ ॥ इतिकृच्छ्रनिर्णयः ॥ ॥ अथसांतपनानि ॥ ॥ पूर्वेद्युःपंचगव्यमात्राशनंपरेद्यु
रुपवासइतिद्विरात्रिकंसांतपनम् ॥ एतदशक्तावेकःपुराणः ॥ यतिसांतपनंतु ॥ पंचगव्यंत्र्यहाभ्यस्तंयतिसांतपनंस्मृतम् ॥ अत्रचतुर्थउपवा

सः ॥ अत्रापिहोमः ॥ पंचगव्योपवासाःपंचषष्ठउपवासइतिषडहःसांतपनः ॥ महासांतपनस्तु ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ एतेषांमध्येक्रमेणैकैकंप्रत्यहंपीत्वाएकरात्रोपवासेसप्ताहसाध्योमहासांतपनः ॥ अत्रधेनुद्वयम् ॥ इतरेषुप्रागुक्तसांतपनेषुसार्द्धंगौरि तिषट्त्रिंशन्मते ॥ प्रथमउपवासस्ततः क्रमेणतेषांषण्णांपानमितिप्रांचः ॥ गोमूत्रगोमयक्षीरदधिसर्पिषांक्रमेणैकैकस्यत्र्यहंत्र्यहमुपयोगे पंचदशाह्निकंतत् ॥ षण्णामेकैकमेतेषांत्रिरात्रमुपयोजयेत् ॥ त्र्यहंचोपवसेदंत्यमित्येकविंशतिरात्रसाध्यमेतत् ॥ एतान्येवतुपेयानिएकैकंतुद्व्य हंद्व्यहम् ॥ अतिसांतपनंत्वेतत् ॥ इतिद्वादशरात्रसाध्यम् ॥ ॥ इतिसांतपनानि ॥ ॥ अथचांद्रायणानि ॥ पिपीलिकामध्यचांद्रायणं तु ॥ एकैकंह्रासयेत्पिंडंकृष्णेशुक्लेचवर्धयेत् ॥ उपस्पृशंस्त्रिषवणमेतच्चांद्रायणंस्मृतम् ॥ कृष्णप्रतिपद्यस्यारंभः ॥ कृष्णप्रतिपदिचतुर्द शग्रासान्ग्रसित्वाततएकैकंह्रासित्वाचचतुर्दश्यामेकंग्रसित्वाऽमायामुपोष्यपुनःशुक्लप्रतिपदमारभ्यपूर्णिमांतं यावद्वर्धयेत् ॥ ग्रासश्चमयूरां डप्रमाणः ॥ आर्द्रामलकप्रमाणोवा ॥ ॥ इतिपिपीलिकामध्यम् ॥ ॥ यवमध्यचांद्रायणंतु ॥ ॥ एवमेवविधिंकृत्स्नमाचरेद्यवमध्यके ॥ शुक्लपक्षादिनियतंचरेच्चांद्रायणव्रतम् ॥ अत्रशुक्लप्रतिपदादिग्रासवृद्धिःपूर्णिमांततत्तोह्रासोऽमांतः ॥ अनयोरष्टधेनवः ॥ वृषभसहिताचात्रगो दक्षिणा ॥ सार्द्धसप्तधेनवइतिशूलपाणिः इदमतिधनिनः ॥ निर्धनस्यतुप्राजापत्यत्रयमित्येके ॥ अत्रैकादश्यादिव्रतलोपोनदोषावहः ॥ यतिचांद्रायणंतु ॥ अष्टावष्टौसमश्नीयात्पिंडान्मध्यंदिनेस्थितः ॥ नियतात्माहविष्याशीयातिचांद्रायणंस्मृतम् ॥ मासमितिशेषः ॥ एतत्प्रा जापत्यचतुष्टयसमामितिबृहद्विष्णुः ॥ शिशुचांद्रायणंतु ॥ चतुरःप्रातरश्नीयात्पिंडान्विप्रःसमाहितः ॥ चतुरोऽस्तमितेसूर्येशिशुचांद्रायणं

स्मृतम् ॥ ऋषिचांद्रायणंतु ॥ त्रींस्त्रीन्पिडान्समश्नीयान्नियतात्माद्दढव्रतः ॥ हविष्यान्नस्यवैमासमृषिचांद्रायणंस्मृतम् ॥ अनुपदोक्ताभ्यां किंचिदाधिकाद्द्विगुणमेतत् ॥ अनुपदोक्तयोश्चतुष्टयधेनुदानमितिशूलपाणिः ॥ यत्तुऋषिणाचांद्रायणेपितावदेवेत्युक्तम् ॥ यच्चान्यैर्धेनुत्रयमित्युक्तंतत्रोपपत्तिश्चिंत्या ॥ ॥ सोमायनव्रतंतु ॥ ॥ गोक्षीरंसप्तरात्रंतुपिबेत्स्तनचतुष्टयात् ॥ स्तनत्रयात्सप्तरात्रंसप्तरात्रंस्तनद्वयात् ॥ स्तनात्तथैवषड्रात्रंत्रिरात्रंवायुभुग्भवेत् ॥ एतत्सोमायनंनामव्रतंकल्मषनाशनम् ॥ प्रतिदिनसंख्यानियमानादरेणमासत्रयम् ॥ चत्वारिंशदधिकशतद्वयग्रासानांपंचविंशत्यधिकशतद्वयग्रासानांवाऽशनेपिचांद्रायणम् ॥ आद्यद्वयातिरिक्तचांद्रायणानांदिनांतरेप्रारंभोनप्रतिपद्येवेतिनियमः ॥ ॥ इतिचांद्रायणानि ॥ ॥ पंचगव्यपरिमाणंतु ॥ गोशकृद्द्विगुणंमूत्रंघृतंविद्याच्चतुर्गुणम् ॥ क्षीरमष्टगुणंप्रोक्तंपंचगव्येतथादधीति ॥ तथाष्टगुणमितिप्रांचः ॥ ॥ गोमूत्रमाषकाण्यष्टौगोमयस्यतुषोडश ॥ क्षीरस्यद्वादशप्रोक्तादध्नःपंचदशेतिच ॥ मूत्रवद्घृतस्य ॥ कुशोदकसाहित्यंचात्रेत्यन्ये ॥ दधनिदशमाषाः कुशोदकेतदर्धंतोतिस्मृत्यर्थसारे ॥ ताम्रवर्णायागोर्मूत्रम् ॥ श्वेतायागोमयम् ॥ पीतायाःक्षीरम् ॥ नीलायादधि ॥ कृष्णायाःसर्पिरितिच ॥ तच्चप्रणवेनाहृत्यतेनैवालोड्यतेनैवादायतेनैवापिबेदित्युक्तम् ॥ वक्ष्यमाणप्रायश्चित्तेषुसामान्यतोव्रतशब्दोगोमूत्रयावकाहारपरः ॥ दिनरात्रिशब्दौतद्वचनावेव ॥ उपवासाभिव्याहारेत्वहोरात्रवचनौ अहःशब्दश्चाहोरात्रपरइतिकाचिद्ग्रंथेव्यवस्थोक्ता ॥ मासोपवासेपंचदशप्राजापत्यानि ॥ तथाकृच्छ्रशब्दंत्रिशद्धेनुसमम् ॥ गोमूत्रपाचितयावकस्यमासंपानेद्वादशप्राजापत्यानि ॥ पाकोत्तरमीषद्गोमूत्रयुक्तपानेकृच्छ्रद्वयम् ॥ त्रिंशन्नक्तैर्दशोपवासास्तत्रकृच्छ्रचतुष्टयम् ॥ उपवासस्थाने

एकोविप्रोभोज्यः ॥ शक्तेनद्वौसहस्रगायत्रीजपोवा ॥ द्वादशप्राणायामावा ॥ द्वादशवार्षिकादिषुद्वादशदिनैरेकैकप्राजापत्यकल्पना ॥ अत
एवचतुर्विंशतिमते ॥ कृत्वावाग्निब्रह्महत्यायाःषडब्दंकृच्छ्रमाचरेत् ॥ प्रत्याम्नायेगवांदेयःसाशीतिर्धेनिनांशतम् ॥ तथाऽष्टादशलक्षाणांगाय
त्रीवाजपेद्बुधइति ॥ गायत्र्यास्तजपेत्कोटिंब्रह्महत्यांव्यपोहतीति ॥ द्वादशाब्दसमकक्षंनप्रत्याम्नायइतिबोध्यम् ॥ त्रैमासिकेसार्द्धसप्तप्राजाप
त्यानि ॥ मासिकेव्रतेसार्द्धप्राजापत्यद्वयम् ॥ मासंपंचगव्यपानेप्येवम् ॥ षडुपवासेष्वेकंप्राजापत्यम् ॥ मासंपयोव्रतेसार्द्धप्राजापत्यद्वयम् ॥
वृषभैकादशगोदानसहितात्रिरात्रोपवासात्मकगोवधव्रतेसार्द्धैकादशत्रैमासिकगोवधव्रतेसार्धसप्तेतिस्मृत्यर्थसारे ॥ योगीश्वरोक्तमासिकव्रतेत्री
णितत्सममेकंचांद्रायणंचोतिमिताक्षरा ॥ यत्तुब्रह्मवधोक्तद्वादशवार्षिकेऽशीत्युत्तरशतधेनवस्तावंतिप्राजापत्यानिवेतिप्रांचस्तत्प्रागुक्तचतुर्विंश
तिमतविरुद्धमित्येके ॥ ॥ अथकृच्छ्रस्थानेतीर्थप्रत्याम्नायाउच्यंते ॥ भागीरथ्यांस्नानंषाष्टियोजनागतस्यषडब्दकृच्छ्रसमम् ॥ अत्रयात्रा
योजनवृद्धौयोजनस्यार्द्धकृच्छ्रःवृद्धिःएकयोजनागतस्यमध्येपर्वतादिव्यवधानेकृच्छ्रत्रयंतृतीयम् ॥ तृतीयांशाधिकक्रोशादागतस्यभागीर
थ्यांविध्युक्तस्नानेएककृच्छ्रः ॥ प्रयागेद्विगुणंगंगाद्वारेगंगासागरसंगमेचैवम् ॥ वाराणस्यामगणितम् ॥ वाराणस्यांपातकंनप्रविशति ॥ स
र्वत्रयात्राभाषाभेदकृतदेशांतरविषयेमहापर्वतव्यवधानेमहाव्यवधानेचक्रमेणद्वादशाष्टचतुर्योजनन्यूनाषट्चतुर्द्वियोजनन्यूनावा ॥ विंशति
योजनागतस्ययमुनासरस्वत्योःस्नानमब्दसमम् ॥ अब्दद्वयसमामित्यन्ये ॥ मथुराद्वारवत्योर्द्विगुणम् ॥ प्रभासेप्येवम् ॥ दृषद्वतीशतद्रुवि
पाशावितस्ताशरावतीमरुद्वृधासिक्निमधुमतीपयस्विन्यादिषुदेवनदीषुस्नानांत्रिंशद्योजनागतस्याब्दसमम् ॥ पंचदशयोजनागतस्येत्यन्ये ॥

चंद्रभागावेत्रवतीशरयूगोमतीदेविकाकौशिकीमंदाकिनीपुनःपुनापूर्णापुण्यावाहुदावारुणीगंडक्यादिदेवनदीषु द्वादशयोजनागतस्यषोडश कृच्छ्राणि ॥ एतासांपरस्परसंगमेद्विगुणम् ॥ त्रिगुणमित्यन्ये ॥ अन्यासुसमुद्रगासुनदीषुद्वादशयोजनागतस्यषट्कृच्छ्रसमम् ॥ महानदीषुनद्यर्धम् ॥ शोणनदेगंगार्धसमम् ॥ पुष्करेप्रयागसमम् ॥ सान्निहत्यांनर्मदायांचतुर्विंशतियोजनागतस्यचतुर्विंशतिकृच्छ्रसमम् ॥ कुब्जिकासंगमेद्विगुणम् ॥ शुक्लतीर्थेचतुर्गुणम् ॥ गोदावर्यांषष्टियोजनागतस्यत्र्यब्दसमम् ॥ वंजराप्रणीतयोर्नर्मदावत् ॥ पूर्णायांयोजनार्द्धंकृच्छ्रः ॥ कृष्णावेणीतुंगभद्रयोःप्रतियोजनंकृच्छ्रम् ॥ पंपायांद्विगुणम् ॥ हरिहरेद्विगुणम् ॥ कुल्याःस्नानेनत्रिरात्रोपवासफलदाः ॥ अल्पनद्यःकृच्छ्रफलदाः ॥ नद्योद्विकृच्छ्रफलदाः ॥ उक्तान्यसर्वतीर्थेषुरामक्षेत्रश्रीरंगादिक्षेत्रेषुयोजनसंख्ययाकृच्छ्रसंख्या ॥ एकयोजनादिषड्योजनगांताःस्रवंत्यःकुल्याः ॥ द्वादशयोजनाअल्पनद्यः ॥ चतुर्विंशतियोजनगानद्यः ॥ तदधिकगामहानद्यःसमुद्रगाश्च ॥ उपवाससहितंनदीस्नानंकृच्छ्रसमम् ॥ योजनादर्वागपि ॥ शुनीगर्दभीचांडालीशूद्रीकष्टगानद्यःपापनद्यश्चवर्ज्याः ॥ सर्वत्रसमुद्रस्नानंदर्शेकार्यम् ॥ देवतासमीपेसरःसरिन्नदीसंगमेषुचसदाकार्यम् ॥ समुद्रस्नानेपंचदशयोजनागतस्यपंचदशकृच्छ्राणिइत्यादिस्मृत्यर्थसारेविस्तरः ॥ परार्थंगंतातीर्थंषोडशांशंलभेत् ॥ प्रसंगेनगंतार्द्धंफलम् ॥ अनुषंगेणतीर्थंप्राप्यस्नानेस्नानफलमेवनयात्राफलम् ॥ पितामहभ्रातृमातामहपितृव्यमातुलश्वशुरपोषकार्थंगुर्वाचार्योपाध्यायार्थंतेषांपत्न्यर्थंपितृष्वसृमातृष्वस्रर्थंस्नात्वास्वयमष्टमांशंलभते ॥ पित्रोरर्थंकुर्वन्पुत्रश्चतुर्थांशम् ॥ दंपतीचसपत्न्यश्चलभंतेर्धंमिथःफलम् ॥ आर्धनांचनफलह्रासः ॥ कर्कादौमासद्वयेनिरंतररजस्वलानद्यः ॥ तास्वपिगोमतीचंद्रभागासिंधुर्नर्मदासरयूश्चात्रिरात्रम् ॥ वापीकू

पतडागादिषुस्थितपुराणोदकेषुत्रिरात्रम् ॥ सरस्वतीगंगायमुनादयोनकदापिरजस्वलाः ॥ अथव्रतांगभूताधमायमानियमाश्च ॥ ब्रह्मचर्यंद
याशांतिर्दानंसत्यमकौटिल्यमस्तेयमहिंसामाधुर्यंदमश्चेतिदशयमाः ॥ स्नानंमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहगुरुशुश्रूषाशौचाक्रोधाप्रमा
दताइतिनियमादश ॥ ॥ अथप्रायश्चित्तपूर्वाह्णकृत्यम् ॥ ॥ केशनखादिवपनंकृत्वास्नात्वाघृतंप्राश्यप्रदोपेगृह्याद्वा हिव्रतकालसंख्योल्लेखपूर्व
कंसंकल्पःकार्यः ॥ वपनंचमहापातकगोवधातिरिक्तेविद्वाद्द्विजनृपयोःसधवास्त्रीणांनास्ति ॥ तत्रसधवानांसर्वान्केशान्समुद्धृत्यद्व्यंगुलच्छेदन
मेवतत् ॥ तीर्थेष्वप्यासामेवमेव ॥ विधवानांसर्ववपनम् ॥ केशधारणेच्छायांद्विगुणितंकार्यम् ॥ तत्रदक्षिणापिद्विगुणा ॥ वपनंचादिनत्रयसा
ध्यव्रतेनखरोमच्छेदनमात्रम् ॥ षड्दिनसाध्येश्मश्रुणोपि ॥ नवदिनसाध्येशिखावर्ज्यम् ॥ तदूर्ध्वंसशिखम् ॥ त्रिषड्दिनयोःस्त्रीणांनैव
तत् ॥ धेनुदानादावप्येवंविशेषऊह्यः ॥ अस्यनैमित्तिकत्वात्सदाबद्धशिखेनेत्यनेनाविरोधः ॥ ॥ प्रायश्चित्ततिथयः ॥ प्रायश्चित्तंचाष्ट
मीचतुर्दश्योर्नकार्यम् ॥ चतुर्दश्यांसंकल्प्यामायाकार्यमितिशिष्टाः ॥ तत्रपापंद्विविधम् ॥ रहस्यंप्रकाश्यंच ॥ कर्तृव्यतिरिक्तैरज्ञात
दोषंरहस्यम् ॥ तत्ररहस्येप्रायश्चित्तम् ॥ प्रकीर्णकादिषुपंचविंशतिःप्राणायामाः ॥ उपपातकेशतम् ॥ अनुपातकेद्विशतम् ॥ अतिपातकेत्रि
शतम् ॥ महापातकेचतुःशतम् ॥ सर्वत्राभ्यासेद्विगुणम् ॥ मत्यात्रिगुणम् ॥ मत्याभ्यासेचतुर्गुणम् ॥ यद्वागायत्र्यालक्षजपोमहापापे ॥ पादोन
लक्षजपोऽतिपातके ॥ अर्धलक्षमनुपातके ॥ पादलक्षमुपपातके ॥ तदर्धार्धंप्रकीर्णकादिषु ॥ अत्राप्यभ्यासादौद्वैगुण्यादियोज्यम् ॥ अन्या
न्यपिमहापातकादिषुरहस्यप्रायश्चित्तानिविस्तरेणनिबंधेभ्योग्राह्याणि ॥ अविद्वान्मुखांतरेणव्याजात्प्रायश्चित्तंज्ञात्वारहसिचरेत् ॥ विद्वां

स्तुस्त्वयमेवज्ञात्वाचरेत् ॥ दशलक्षगायत्रीजपः ॥ सर्वपापप्रायश्चित्तम् ॥ सर्वेषामेवपापानांसंकरेसमुपस्थिते ॥ शतंसहस्रशोऽभ्य
स्तागायत्रीपावनंमहदितिस्मरणात् ॥ भस्माच्छन्नोभस्मनिशयानोरुद्रजापीसर्वपापान्मुच्यते ॥ सचैकादशवारम् ॥ सर्वशाखेनमहापात
कातिरिक्तंग्राह्यमितिकेचित् । महापापान्यपीत्यपरे ॥ पुरुषसूक्तंप्रत्यहंषोडशकृत्वोजपन्मासेनगुरुतल्पादेरपिशुद्ध्येत् ॥ एवंपवमानजपा
घमर्षणसूक्तजपादयोऽन्यतोज्ञेयाः ॥ अत्राहारविशेषानुक्तौपयःप्रभृतयः ॥ शिलोच्चयादयोमावाद्यश्चदेशकालौ ॥ अथाशक्तेषुव्याहृ
तिभिराचमनम् ॥ । एवंख्यापनानुतापाध्ययनान्यपिपापनाशकानि ॥ ख्यापनंसभासुपुण्यस्थानेषुचस्वपापकथनपूर्वकमात्मनिंदनम् ॥
अध्ययनंवेदवेदांतादेश्च ॥ उपदिष्टप्रायश्चित्तेष्वेतदंगंनस्वतंत्रम् ॥ अन्यथातादृग्विधिरफलःस्यात् ॥ कृतेपापेऽनुतापोवैयस्यपुंसःप्रजायते ॥
प्रायश्चित्तंतुतस्यैकंहरिसंस्मरणंपरम् ॥ प्रातर्निशितथासंध्यामध्याह्नादिषुसंस्मरन् ॥ नारायणमवाप्नोतिसद्यःपापक्षयेनरइतिविष्णुपुराणे ॥
अत्रकेचित् ॥ अनेनसर्वविधपापप्रणाशोभवत्येव इहव्यवहार्यतातुअतिप्रसंगनिवारणायमन्वादिप्रायश्चित्तैरेव ॥ रागद्वेषादिकलुषितहृ
दयतयातत्राविश्वासवतोजनान्प्रतिसंव्यवहार्यतासिद्ध्येवातदुपदेशइतिप्राहुः ॥ गंगास्नानंसर्वविधंसर्वपापप्रणाशकम् ॥ चांद्रायणसहस्रंतु
यश्चरेत्कायशोधनम् ॥ पिबेद्यश्चापिगंगांभःसमौस्यातांनवासमौ ॥ भवंतिनिर्विषाःसर्पायथाताक्ष्र्यस्यदर्शनात् ॥ गंगायादर्शनात्तद्वत्सर्वपापैः
प्रमुच्यते ॥ इत्यादिमहाभारतादिवचनेभ्यः ॥ नचैतान्यर्थवादाः ॥ स्नानमात्रेणगंगायांपापंब्रह्मवधोद्भवम् ॥ दुराधर्षंकथंयातिचिंतयेद्योव
देदपि ॥ तस्याहंप्रददेपापंब्रह्मकोटिवधोद्भवम् ॥ स्तुतिवादमिमंमत्वाकुंभीपाकेपुजायते ॥ आकल्पंनरकंभुक्त्वाततोजायेतगर्दभइति ॥

भविष्यकौर्म्यादिभ्यः ॥ पापानांपापहंत्रीत्वंस्वर्गमोक्षैकहेतुता ॥ स्वभावएवगंगायाः । शैत्यंशीतरुचेर्यथा ॥ नगंगासदृशंतीर्थनदेवःके
शवात्परः ॥ ब्राह्मणेभ्यःपरंनास्तीत्येवमाहपितामहः ॥ सर्वंकृतयुगेतीर्थंत्रेतायांपुष्करंस्मृतम् ॥ द्वापरेतुकुरुक्षेत्रंकलौगंगैवकेवलम् ॥
गंगाकलियुगेस्मृतेतिपाठांतरे ॥ येनाकार्यशतंकृत्वाकृतंगंगैवसेवनम् ॥ तत्सर्वंतस्यगंगांभोदहत्यग्निरिवेंधनमित्यादिवचनान्यनुसंधेयानि ॥
कलियुगेइत्थंपापनाशसामर्थ्यंगंगायाएव ॥ नतुपुष्करादीनाम् ॥ त्रेतादौतुपापस्याल्पत्वात्तन्नाशसामर्थ्यंतेषामपीतिसर्वंकृतयुगइत्यस्य
तात्पर्यम् ॥ अथसर्वप्रायश्चित्तविधिः ॥ ॥ तत्रमहापातकादर्वाचीनेषुबहुविधेष्वज्ञानकृतेषुप्रतिनिमित्तंकर्तुमशक्तौसर्वप्रायश्चित्तं
षडब्दमत्यंतगुणवतोविरक्तस्य ॥ अभ्यासेद्विगुणम् ॥ मत्यात्रिगुणम् ॥ मत्याभ्यासेचतुर्गुणम् ॥ अत्यंताभ्यासेनिरंतराभ्यासेवापंच
गुणम् ॥ बहुकालाभ्यासेषड्गुणम् ॥ उपपातकमारभ्यार्वाचीनेषुपापेष्वज्ञानकृतेषुप्रतिनिमित्तंकर्तुमशक्तौद्व्यब्दंप्रायश्चित्तम् ॥ अभ्यासा
दौप्राग्वत् ॥ प्रकीर्णकेषुतादृशेषुतादृशस्यएकाब्दम् ॥ अभ्यासादौप्राग्वत् ॥ क्षुद्रपापेषुतादृशेषुतादृशस्यकृच्छ्रातिकृच्छ्रचांद्रायणानि
तत्स्थानेद्वादशकायानिवा ॥ अभ्यासादौप्राग्वत् ॥ चतुष्टयमिदंचोत्तमस्य ॥ मध्यमस्यद्विगुणम् ॥ अधमस्यत्रिगुणम् ॥ द्वादशाब्दंद्वि
गुणम् ॥ महापातकावधिसकलपापप्रायश्चित्तमिति ॥ सर्वत्रानुक्तानिष्कृतौकृच्छ्रचांद्रायणानिसमस्तव्यस्तरूपेणयोग्यतयायोज्यानि ॥
क्षुद्रेषुपापेषुद्वादशषट्त्रिंशद्वाप्राणायामाः ॥ स्त्रीशूद्राणाममंत्रकास्ते ॥ पुरुषाकारहंतकाराग्रदानानिवा ॥ मौनलोपेषुविष्णुस्मरणम् ॥
अथप्रकाररूपेषूद्देशक्रमेणप्रकीर्णप्रायश्चित्तान्युच्यंते ॥ खरेणोष्ट्रेणवाशुक्तंयानमारुह्याध्वगंतानग्नस्वापीनग्नतयाऽन्नभोक्तादिवास्वदारगामीच

सचैलस्नानपूर्वकंप्राणायामेनशुद्ध्येत् ॥ अमत्यास्नानमात्रम् ॥ अभ्यासेप्राणायामचतुष्टयम् ॥ चतुरधिकाभ्यासेएकउपवासः ॥ अत्यंता
भ्यासेत्रिरात्रम् ॥ साक्षात्खरोष्ट्रारोहिणांद्विगुणम् ॥ गुरुत्वंकृत्यहीनपुरुषंप्रयोज्यहुंकारपूर्वकच्छलवादौविप्रंनिर्जित्यवस्त्रेणापिवाविप्रस्य
कंठबंधनेतृणेनापिवातस्यताडनेगुर्वादिकंशीघ्रंनत्वाविगतकोपंकृत्वानक्तंभुंजीत ॥ उपवसेदितिस्मृत्यर्थसारे ॥ अभ्यासेत्रिरात्रम् ॥
गुरुदेवविप्राचार्यमातापितृनरेंद्राणांप्रतिष्ठीवनेअतिवादेआक्रोशनेऽतिक्रमेपैशुन्येचजिह्वांदहेद्धिरण्यंदद्यात् ॥ अभ्यासेसहस्रगायत्रीजपः ॥
अमत्यातुप्राजापत्यंकृत्वास्नात्वागुरुप्रसादनात्पूतोभवति ॥ शूद्रस्यविप्रातिक्रमादोसतरात्रमभोजनम् ॥ क्षत्रियातिक्रमेएकउपवासः ॥
विप्रंहंतुंदंडोद्यमनेकृच्छ्रः ॥ इदमेवावगूरणे ॥ दंडनिपातनेतिकृच्छ्रः ॥ अभ्यंतररक्तेत्वग्भेदेवाकृच्छ्रः ॥ अस्थिभेदनेतिकृच्छ्रः ॥
अंगकर्तनेपराकः ॥ केचित्तुदंडोद्यमननिपातनरुधिरस्रावेतुअर्धकृच्छ्रकृच्छ्रातिकृच्छ्राणि ॥ अन्येपादकृच्छ्रार्धकृच्छ्रकृच्छ्राण्याहुस्तेषांका
माकामभेदेनव्यवस्था ॥ अंगच्छेदनेदशगोदानम् ॥ कामतोद्विगुणम् ॥ अत्रयद्यपिशोणितनिपातनयोःक्रमेणनिपातनावगूरणेआवश्यके
तथापितन्निमित्तेप्रायश्चित्तेपृथग्भवतः ॥ तयोरवश्यंभावित्वेनतदभ्यंतरवर्तित्वात् ॥ यत्रपुनर्निमित्तानां नांतर्भावनियमस्तत्रपृथग्भवंत्येव
यथापर्वणिपरभार्यारजस्वलांतैलाभ्यक्तोदिवागच्छतिजलेइति ॥ विप्रस्यपादप्रहारेउपोष्यस्नात्वाप्रणिपत्यप्रसादनम् ॥ पादेनस्प
र्शेतुप्रसादनमेव ॥ अप्सुचाग्नौचआर्तस्यविण्मूत्राद्युत्सर्गेसचैलस्नानपूर्वकंगोस्पर्शः ॥ मत्यातूपोष्यसचैलंस्नायात् ॥ कामतो
ऽभ्यासेउपवासत्रयम् ॥ इदमापःप्रवहतेत्यस्यगायत्र्यावाजपश्च ॥ अनापदित्रिषवणस्नानंत्रिरघमर्षणंचबोध्यम् ॥ अनार्तस्यअत्यंता

भ्यासेवाततकृच्छ्रम् ॥ उदकंविनामूत्राद्युत्सर्गेप्येवमेव ॥ सर्वमिदंमूत्रपुरीषोत्सर्गोक्तधर्ममात्रोपलक्षणम् ॥ निर्जलारण्यादौतुअपोहृद्वै
वशौचसचैलस्नानेकुर्यात् ॥ मूत्रादिवेगधारणेअष्टोत्तरशतजपः ॥ श्रौतस्मार्तकर्मलोपेतूपवासः ॥ इदंचानुक्तप्रायश्चित्तसमुच्चयेनवाबो
ध्यम् ॥ सूर्योदयेस्वस्थोमत्यासुप्तोदिनेतिष्ठन्सावित्रीजपन्नुपवसेत् ॥ सूर्यास्तमयेसुप्तोरात्रौतिष्ठन्सावित्रीजपन्नाद्यात् ॥ जीर्णमल
वद्वस्त्रधारणादिस्नातकव्रतलोपेतूपवासोऽष्टशतजपोवा ॥ पंचमहायज्ञेष्वन्यतमलोपेनातुरस्योपवासोधनिनः कृच्छ्रार्द्धम् ॥ आहि
ताग्नेः पर्वण्युपस्थानलोपेचैवम् ॥ स्नानंविनाभोजनेएकउपवासोदिनंव्याप्यजपश्च ॥ ऋतौभार्यागमनलोपेकृच्छ्रार्द्धम् ॥ अकामतः
प्राणायामशतम् ॥ इदंचापर्वणिसन्निहितस्यारोगिणएव ॥ षोडश्यांरात्रौतुपर्वण्यपिगच्छेत् ॥ स्वभार्यांपर्वण्यपिगच्छेत् ॥ स्वभार्यांक्रोधादप
गम्येतिवदतांवर्णानांक्रमेणकृच्छ्रनवरात्रइतिपद्मात्त्रिरात्राणिसर्वेषांप्राजापत्यमितिगौडाः ॥ त्यागानंतरंसंग्रहेच्छायामृषिचांद्रायणंकृत्वा
सकार्यः ॥ एकपंक्त्युपविष्टानांस्नेहादिनाविषमदानेदापनेचप्राजापत्यम् ॥ नदीसंक्रमकर्तुश्चकन्याविघ्नकरस्यच ॥ समेविषमकर्तुश्चशुद्ध्यै
चांद्रायणंस्मृतम् ॥ संक्रमउदकावतरणमार्गः ॥ पूजादौमार्गादौचसमेविषमकर्तृत्वम् ॥ अत्रचांद्रायणंभैक्षान्नेनेतिस्मृत्यर्थसारे ॥ पतितम्ले
च्छादिभाषणेपुण्यकृतांध्यानंविप्रेणसहभाषणंवा ॥ भार्यान्नधनानांलाभस्यविघ्नकरणेप्रत्येकंसंवत्सरव्रतम् ॥ यज्ञोपवीतंविनाभोजनेंबुपाने
चनक्तव्रतम् ॥ अंबुपानेत्रिः प्राणायामावा ॥ मत्याभोजनेतूपवासः ॥ उच्छिष्टस्यमत्याभोजनांबुपानयोरप्येवम् ॥ यज्ञोपवीतंविनामत्यामू
त्रादिकरणेभक्षणेचाष्टशतगायत्रीजपः ॥ अकामतः एषुक्रमेणत्रिषट्प्राणायामनक्तव्रतानि ॥ यद्युत्तिष्ठत्यनाचांतोभुक्तवानासनात्ततः ॥

सद्यः स्नानंप्रकुर्वीत ॥ अंबुनिस्वप्रतिबिंबदर्शने मयितेज इतिमंत्रंजपेत् ॥ अशुचिद्रव्यस्पर्शे वाक्पाणिपादचापल्यकरणेकामकृतेनिष्प्रयोज
नानृतवादनेचगायत्रीजपः ॥ अकामकृतेत्वाचमनम् ॥ अत्यल्पेदक्षिणकर्णस्पर्शः ॥ जलाभावेवाशय्यारूढ १ पादुकोपानदारोपितपादो २
भयोच्छिष्टा ३ ऽन्धकारस्था ४ ऽशुद्ध ५ जपकृत ६ होमकृत ७ श्राद्धकार ८ समित्पुष्पकुशाग्न्यंबुगंधाक्षतान्नपाणिभैक्ष्याज्यपाणिदेव
पूजानिरतानामभिवादनेत्रिरात्रमुपवासः ॥ एतैरन्याभिवादनेएषामप्येवम् ॥ आह्निकविच्छेदेपित्रिरात्रम् ॥ बहुदिवसविच्छेदेद्विगुणम् ।
निमंत्रितस्यान्यत्रभोजनेत्रिरात्रम् ॥ अकामतः सकृत् ॥ निमंत्रितस्यभोजनाप्रदानेयतिचांद्रायणम् ॥ इंद्रधनुःपलाशाग्न्योरन्यप्रदर्श
नेउपवासोधनुर्दंडश्चक्रमेणदक्षिणा ॥ दंड्योत्सर्गेराजैकरात्रमुपवसेत् ॥ त्रिरात्रंपुरोहितः ॥ अदंड्यदंडनेकृच्छ्रंपुरोहितः ॥ त्रिरात्रं
राजा ॥ पादप्रतापनंकृत्वाकृत्वावह्नितथाप्यधः ॥ कुशैः प्रमृज्यपादौतुदिनमेकंगृही भवेत् ॥ भूमिकन्यानृतेमासंगोमूत्रयावकपानम् ॥दुःस्वप्नारि
ष्टयोर्दर्शनेसघृतहिरण्यदानम् ॥ विप्रयोर्विप्राग्न्योर्दंपत्योर्गोविप्रयोर्गोबलीवर्दयोर्विष्णुगरुडयोर्मध्यगमनेद्विजस्यसांतपनम् ॥ वेदाध्ययनहो
मसान्नायांगदोहविवाहकालेष्वेषामंतरागमनेचांद्रायणम् ॥ कुनखिश्यावदंतौप्राजापत्यंकृत्वादंतान्नखांश्चोद्धरेयाताम् ॥ क्षत्रियस्तुरणपृष्ठंद
त्वाप्राणपरायणः ॥ संवत्सरव्रतंकुर्यात् ॥ एतदेवफलप्रदवृक्षच्छेदेच ॥ तीर्थयात्रांविना सिन्धुसौवीरसौराष्ट्रांस्तथाप्रत्यंतवासिनः ॥ अंगवं
गकलिंगांध्रान्गत्वासंस्कारमर्हति ॥ एवंमगधदेशेपि ॥ कर्मनाशाजलस्पर्शाकरतोयाविलंघनगंडकीबाहुतरणेष्वप्येवम् ॥ नीलवस्त्रादिधार
णेकेशनिर्मितधारणेचोपवासः पंचगव्यपानम् ॥ हिरण्योदकपानंचपरेद्युः ॥ नीलीमध्यगमनेत्रयः प्राणायामाः ॥ नीलीजदंतधावनेवस्त्रधा

रणवत् ॥ रोमकूपेषुनीलीरजःपतनेवर्णमात्रस्यतप्तकृच्छ्रम् ॥ नीलींविक्रीणन्पालयंस्तद्वृत्त्याजीवंश्चपताति ॥ विरक्तश्चेत्रिभिः कृच्छ्रैः शु
द्ध्येत् ॥ नीलीधृत्वामैथुनेउत्पन्नोगर्भश्चाण्डालोभवाति ॥ नीलीधृत्वामृतः पष्टिवर्षाणिविष्ठायांकृमिर्भवाति ॥ विधवयानीलीधारणेतद्भर्तुर्नरकः ॥
नीलीधारणपूर्वकमन्नदानेदातुर्भोक्तुश्चसांतपनम् ॥ नीलीदारुभेदनेनरुधिरदर्शनेचांद्रायणम् ॥ स्त्रीधृताशयनेनीलीब्राह्मणस्यनदुष्यति ॥
कम्बलेपट्टसूत्रेचनीलीसंगोनदुष्याति ॥ अपांक्तेयपंक्तिभोजनेउपवासः परेद्युः पंचगव्यंच ॥ प्रत्यर्कादिमेहनेआत्मनः शकृद्दर्शनेचसूर्यंविप्रंगां
वापश्येत् ॥ क्षत्रियवैश्ययोरभिवादनेविप्रस्योपवासः ॥ शूद्रस्याभिवादनेत्रिरात्रमुपवासः ॥ गृहस्थस्यानापदिसिद्धान्नभिक्षाकरणेदशरात्रंवज्र
कृच्छ्रसंबंधिद्रव्यपानम् ॥ आपदित्र्यहम् ॥ देवगुर्वाद्यभिमुखनिष्ठीवनेजीवनविरोधेनजिह्वांदहेद्धिरण्यंदद्यात् ॥ प्रतिमाभेदनेदेवालयवापीकूपा
रामभेदनेचेदं विष्णुर्मानस्तोकेविष्णोः कर्माणिपादोस्यामिति चतस्रआज्याहुतीर्हुत्वाथांदेवतामुच्छेदयतितस्याएवब्राह्मणान्भोजयेत् ॥ प्रति
माऽत्रमृन्मयीपूजितोज्झिताच ॥ प्रायश्चित्तस्याल्पत्वात् ॥ तदत्रप्रतिमातारतम्येनदंडप्रायश्चिताधिक्यंयोज्यम् ॥ दारिद्र्यक्रोधमात्स
र्यादिभिर्भर्तुरतिक्रमेऽतिकृच्छ्रः ॥ पर्वणिमैथुनेसचैलंस्नात्वावारुणीभिर्मार्जयेत् ॥ श्राद्धदिनेमैथुनेउपवासएव ॥ स्वपत्न्यांरजस्वलायां
गत्वोपवासत्रयपूर्वकंचतुर्थेघृतप्राशनम् ॥ कामतश्चेत्सप्तरात्रमुपवासः ॥ अकामतोऽभ्यासेकृच्छ्रः ॥ कामतोत्यंतानवच्छिन्नाभ्यासे न
वमासिकव्रतम् ॥ त्रैवार्षिकमितिस्मृत्यर्थसारे ॥ कामतोऽभ्यासमात्रेप्रथमेद्विपराकम् ॥ द्वितीयेसांतपनम् ॥ तृतीयेप्राजापत्यमिति ॥ अका
मतः प्रवृत्तस्यरेतःसेकात्प्राङ्निवृत्तस्यसचैलंस्नानंमहाव्याहृतिभिर्होमश्च ॥ षण्मासोत्तरंगर्भिणीगमनेप्येवम् ॥ यदातुस्त्रीसंभोगमंतरेणा

ध्यकामतोऽहठाच्चरमधातुविसर्गस्तदास्कन्नंतोयन्मह्यंरेतः पृथिवीपुनर्मामैत्वित्यभिमंत्र्यतेनरेतसाऽन्तनयोर्भ्रुवोरूर्ध्वमध्यमानामिकयास्पृशेत् ॥
कामतःप्राणायामत्रयसहितसहस्रगायत्रीजपः ॥ वानप्रस्थयत्योश्चांद्रायणम् ॥ गृहस्थस्ययत्नपूर्वकंधातुविसर्गे वारुणीभि
र्मार्जनमित्यपिक्वचित् ॥ स्वप्नेतुत्रिनमस्काराःसूर्यस्यगृहस्थैःकार्याः ॥ तयोस्त्वघमर्षणत्रयम् ॥ ब्रह्मचारिणस्तुस्वप्नेरेतःस्खलने
स्नात्वार्कंसंपूज्यत्रिःपुनर्मामित्यृचंजपेत् ॥ कामतउत्सर्गेसंवत्सरव्रतंचरेत् ॥ भग्नेनरागेणस्वप्नेगृहस्थादीनांस्खलनेआदित्यार्चनादिपूर्व
वत् ॥ नैष्ठिकब्रह्मचारिणोद्विगुणम् ॥ वमनेऽस्नात्वापंचगव्यपानम् ॥ पूर्वेदिनभुक्तस्यवमनेऽपवासोपि ॥ मांसमापमसूरवमनेऽप
वासत्रयम् ॥ स्नानपूर्वकप्राणायामत्रयंघृतप्राशनंच ॥ दिवास्वापनग्नस्त्रीदर्शननग्नस्वापश्मशानाक्रमणहयारोहणपूज्यपूजातिक्रमाजी
र्णश्मश्रुकर्मदुर्जनस्पर्शेषुस्नानम् ॥ कामतोनक्तभोजनम् ॥ गर्भाधानादिचूडांतसंस्कारेष्वेकैकलोपेपादकृच्छ्रम् ॥ चूडायाअर्धकृच्छ्र
म् ॥ अनापदिद्विगुणम् ॥ प्रायश्चित्तोत्तरंतत्तत्संस्कारप्रमाणम् ॥ गर्भाधानमात्राकरणेगोदानपूर्वकंपुंसवनंकार्यम् ॥ संवत्सरंनित्यक्रिया
लोपेतुपडप्राजापत्यानि ॥ आक्रोशनानृतवादयोरेकत्रयोवाऽपवासाः ॥ अकामतोऽभ्यासेतत्कृच्छ्रम् ॥ निषिद्धकाष्ठैर्दंतधावनेगोदर्शनम्
गृहीतव्रतस्यप्रमादादिनाभंगेऽपवासत्रयम् ॥ पुनर्व्रतग्रहणंच ॥ विप्रस्याष्टवर्षपर्यंतंक्षत्रवृत्त्याधनार्जनेचांद्रायणम् ॥ वैश्यवृत्तौपण्मा
सान् ॥ शूद्रवृत्तौतुसकृदेवपुनरुपयनपूर्वकंकृच्छ्रम् ॥ शूद्रस्यद्विजकर्मकरणेप्येतत् ॥ तद्धनत्यागोत्तरमिदंप्रायश्चित्तम् ॥ स्त्रीधनोपजीवने
स्त्रियैतद्धनंदत्त्वाचांद्रायणम् ॥ भार्यासवर्णमैथुनेकृच्छ्रम् ॥ गोयुक्तयानस्थस्यमैथुनेतदर्धम् ॥ अकामतोऽभ्यासेस्नानमात्रम् ॥ वस्ति

शेखर.

कर्मणिप्रच्छर्दनविरेचनयोरभ्यासेशिशुकृच्छ्रः ॥ अन्यतःस्नानम् ॥ देवागारशिलादिनास्वगृहकरणेकृच्छ्रंयतिसांतपनंच ॥ गुरुंप्रतिश्रु
तवस्त्वकरणेततकृच्छ्रसहितंचांद्रायणम् ॥ भोजनकालेपरिगृहीतमौनत्यागेतदन्नत्यागः ॥ अर्धभुक्तान्नपात्रेणजलपानेपशुवत् ॥ मुखे
नजलपानेचोपवासः ॥ इष्टापूर्तादिशुभाशुभमहाकर्मस्थऋत्विगाचार्यादीनांद्वादशकृच्छ्रास्तदर्धंवासर्वंप्रायश्चित्तम् ॥ श्राद्धोपवासादिनि
षिद्धदिनेपुदंतधावनेगायत्र्याःशतसंयुतांबुपानम् ॥ कन्यायाविवाहात्पूर्वंरजोदर्शनेतत्पितातदृतून्गणयित्वातत्संख्ययागोदानंकृत्वाअशक्ता
वेकांगांसुवर्णशृंगादिगोदानविधिनादत्त्वाऽत्राप्यशक्तौ सदक्षिणमन्नंविप्रेषुदत्त्वा त्रिदिनमुपोषितां चतुर्थरात्रौ गव्यपयोमात्राहारांकन्यांनिवृत्तर
जस्कांभूषितांदद्यात् ॥ तामुद्वहन्वरस्तच्छुद्धचैकूष्मांडमंत्रैर्घृतंजुहुयात् ॥ विवाहहोमकालेउपस्थितेआरब्धेविवाहेवारजोदर्शनेतुस्नाप
यित्वातां युंजानेतितैत्तिरीयमंत्रेणहुत्वाविवाहंप्रवर्त्तयेत् ॥ सुरापात्रगंधमाघ्रायसोमपोब्राह्मणोऽप्सुनिमग्नस्त्रीन्प्राणायामांस्त्रिरघमर्षणजपंवाकृ
त्वाघृतप्राशनंकुर्यात् ॥ असोमपोनप्सुइतरस्यामंत्रकप्राणायामाः ॥ मद्यगंधेतदर्धम् ॥ साक्षात्सुराघ्राणेसुरापानवत् ॥ अमत्याघ्राणे
प्राणायामास्त्रयः ॥ मद्यविण्मूत्रपूतिगंधानामन्यतमाघ्राणे त्रिःप्राणायामाः ॥ दर्शनेस्पर्शनेचस्नानंघृतप्राशनंच ॥ सुरोपस्पर्शेस्नानंपंच
गव्यंच ॥ तद्घ्राणेप्सुत्रिःप्राणायामाः ॥ असोमपस्यानप्सुइतरस्यामंत्रकम् ॥ मद्यविण्मूत्रविप्रुड्भिःसंस्पृष्टेमुखमंडलेमृत्तिकागोमयैः
प्रक्षाल्यपंचगव्यंपिबेत् ॥ मदिरांदत्त्वास्पृष्ट्वाप्रतिगृह्यचस्नात्वाकुशांबुत्र्यहम् ॥ संक्रांत्यादिनिमित्तेष्वस्नात्वाभोजनेऽष्टसहस्रंगायत्रीजपः ॥
शूद्रादिस्पर्शेनिमित्तेतूपवासः ॥ चांडालादिस्पर्शनिमित्तेस्नात्वाभुक्तौत्रिरात्रंकार्यंवा ॥ मत्याचांद्रंसकृत् ॥ कामाभ्यासेद्विगुणम् ॥

रजकस्पर्शनिमित्तेतदर्धम् ॥ पानेत्वेकउपवासः ॥ चांडालादिरजकादिस्पृष्टस्पर्शनिमित्तेत्वस्नात्वाभोजनेउपवासः ॥ नित्यस्नानमकृत्वाभुक्तौउपवासस्त्रिरात्रंवा ॥ नैमित्तिकस्नानेसर्वत्राष्टशतगायत्रीजपः ॥ कामकृतेसहस्रत्रयम् ॥ अमेध्याद्यस्पृश्यस्पर्शनेत्वस्नात्वाभुक्तौगृहस्थादेस्त्रिरात्रम् ॥ मत्याषट्त्रिरात्रम् ॥ व्रतिनःकार्यंचांद्रंवा ॥ श्वपाकादिस्पर्शनिमित्तेष्वस्नात्वाभुक्तौमत्यात्रिरात्रम् ॥ हस्तस्थापितकवलादिभोजनेअब्राह्मणसमीपेभोजनेदुष्टपंक्तौभोजनेबालांस्त्यक्त्वाभोजनेशूद्रहस्तेनभोजनपानेचामत्यानक्तम् ॥ मत्यातूपवासःपंचगव्यंच ॥ शूद्रपंक्तौभोजनेद्विरुपवासः ॥ आसनारूढपादोवावस्त्रार्धप्रावृतोपिवा ॥ मुखेनधमितंवापिभुक्त्वासांतपनंचरेत् ॥ अनाचम्यभक्षणेष्टशतजपःभोजनेतूपवासः ॥ आपोशनंविनाभोजनेप्येवम् । अभ्यासेसहस्रगायत्रीजपः ॥ भोक्तुकामस्यापोशनात्पश्चादभ्यवहारात् पूर्वंमूत्रपुरीषगमनेसचैलोबहिराप्लवः ॥ षट्प्राणायामाश्च ॥ भुंजानस्यमस्तकेविष्ठादिपतनेऽन्नंत्यक्त्वानद्यांस्नानंत्रिःप्राणायामाः ॥ भार्यायाःसहोदरैर्वाभोजनेदिनत्रयमभोजनम् ॥ ज्ञातिभिःसहभोजनेत्वहोरात्रम् ॥ ऋतौभूमौभोजनेऽहोरात्रंयावकाहारःपंचगव्यपानंच ॥ घृतहीनाहुतिपंचकभोजनोत्तरंसघृतभोजनात्यंताभ्यासेचांद्रायणम् ॥ चांडालश्वपचक्षत्तृग्रसूतवैदेहिकमागधायोगवाश्चांडालाद्याः ॥ विप्रायांशूद्राज्जातश्चांडालः ॥ क्षत्तुरुग्रायांजातःश्वपचः ॥ क्षत्रियायांशूद्राज्जातःक्षत्ता ॥ राजन्याच्छूद्रायांजातउग्रः ॥ विप्रायांवैश्याज्जातःसूतः ॥ विप्रायांक्षत्रियाज्जातोवैदेहिकः ॥ क्षत्रियायांवैश्याज्जातोमागधः ॥ वैश्यायांशूद्राज्जातोयोगवःशौंडिकादयश्च ॥ कापालिकानिर्णेजकव्यातुकलुब्धकांत्यजाः ॥ अंत्यजाश्चचर्मकाररजकनटबुरुडकैवर्तकमेदभिल्लाःसप्त ॥ सूतिकारजस्वलापतितशववाहकपंढदेवलकविरुद्धा

स्यारूढपतिताभिशस्ताअंत्यजाश्च श्वादयश्चान्त्यजाद्याः ॥ श्वविड्वराहखरोष्ट्राद्याः श्वादयः एषामेवपंचमाइतिसंज्ञा ॥ गोमांसभक्षकोयस्तु
विरुद्धंबहुभाषते ॥ सर्वाचारविहीनश्चम्लेच्छइत्याभिधीयते ॥ सएवयवनदेशोद्भवोयावनः ॥ तत्रभुक्तिसमयेचांडालांत्यजादिदर्शनेआ
चमनपूर्वकंप्राणायामत्रयंभोजनत्यागेसति ॥ तदत्यागेतूपवासःपंचगव्यंच ॥ मूत्राद्युत्सर्गानंतरंशौचकरणंविनाभोजनेत्रिरात्रंयावकपान
मुपवासोवा ॥ जलपानेतूपवासःपंचगव्यंवा ॥ मूत्राद्युत्सर्गवेलायांभोजनेपानेउपवासोव्याहृतिभिःसर्पिषाऽष्टोत्तरशतहोमः ॥ कांजिकादिना
शौचंकृत्वाभोजनेपुनर्जलेनशुद्धिंकृत्वोपोष्यपंचगव्यंपिबेत ॥ एकपंक्त्यांतुभुंजानोविप्रोविप्रंयदास्पृशेत् ॥ शिष्टंतदन्नंभुक्त्वैवगायत्र्यष्टशतं
जपेत् ॥ शिष्टंपात्रस्थितंतदुत्तरंभुक्तेर्विरामः ॥ भोजनोत्तरमुच्छिष्टयोःस्पर्शेउभयोरपिसद्यःस्नानंशतजपोवा ॥ तादृशस्यक्षत्रियवैश्ययस्प
र्शेक्रमेणनक्तोपवासौ ॥ नक्तंघृतप्राशनमेवस्नानंजपश्चेतिस्मृत्यर्थसारे ॥ भोजनोत्तरमेवतयोःस्पर्शेउपवासउपवासोवा ॥ भुक्तोच्छिष्टस्यशू
द्रश्वादिस्पर्शेतूपोष्यपरेद्युर्नक्तम् ॥ परेद्युःपंचगव्यपानम् ॥ भुक्त्वानाचामेपीदम् ॥ इदंकामतः ॥ अकामतस्तुस्नानंशतगायत्रीजपश्च ॥ भुक्तो
च्छिष्टानाचांतस्यामेध्यमूत्रादिस्पर्शेपंचगव्यपानम् ॥ उच्छिष्टस्यचांडालादिस्पर्शेत्रयउपवासाअष्टाधिकशतगायत्रीजपश्च ॥ चतुर्थेपंचगव्यं
चमिलित्वापादोनप्राजापत्यम् ॥ ज्ञात्वाबलात्स्पर्शेद्विगुणम् ॥ अन्येतुअनुच्छिष्टस्यचांडालादिस्पर्शेस्नानम् ॥ उच्छिष्टस्यतत्स्पर्शेपूर्णप्रा
जापत्यम् ॥ ज्ञात्वातुद्विगुणमित्याहुः ॥ उच्छिष्टस्यचांडालान्नस्पर्शेचांद्रम् ॥ अधरोच्छिष्टेत्रिरात्रम् ॥ भुक्तोच्छिष्टस्यानाचांतस्यांत्यजशौं
डिकादिभिर्ज्ञानतःस्पर्शेप्राजापत्यम् ॥ अधोच्छिष्टेपादःसर्वत्र ॥ येनास्येग्रासःक्षिप्तोननिगीर्णःसोधोच्छिष्टःभुक्तोच्छिष्टस्यरजकादिस्पर्शेत्रिरात्रं

घृतप्राशनम् ॥ मूत्राद्युत्सर्गोत्तरमकृतशौचः अधरोच्छिष्टः भोजनाद्युत्तरमनाचांतऊर्ध्वोच्छिष्टः ॥ तत्राधरोच्छिष्टस्यविप्रस्यचांडालादि
स्पर्शेत्रिरात्रोपवासपूर्वकंपंचगव्यम् ॥ तस्यरजस्वलारजकादिस्पर्शेएकउपवासः ॥ अनुक्तेप्यत्रानुच्छिष्टस्पर्शेस्नानंविधीयते तत्रो
च्छिष्टस्पर्शेत्रिरात्रंकार्यंवा ॥ ऊर्ध्वोच्छिष्टार्धमधरोच्छिष्टइतिकल्प्यम् ॥ भुंजानस्यरजस्वलादिस्पर्शेशिशुकृच्छ्रः प्राणायामशतंच ॥ अ
मत्यात्र्यहम् ॥ भुंजानस्यगुदस्रावेशौचंकृत्वोपाप्यपंचगव्यम् ॥ भुंजानस्याशौचप्राप्तौमुखस्थग्रासंत्यक्त्वास्नानम् ॥ तद्ग्रासाशनेउप
वासः ॥ सर्वाशनेत्रिरात्रम् ॥ भुंजानस्यानुच्छिष्टेनसगोत्रेणवास्पर्शेभोजनंविरम्यशुद्धिः ॥ भुंजानस्यभुक्तोच्छिष्टेनसवर्णेनस्पर्शेस्नानंज
पोवा ॥ भुंजानस्यशूद्रस्पर्शेउपवासःपंचगव्यंच ॥ भुंजानस्यचांडालादिशब्दश्रवणेभोजनंविरम्यशुद्धिः ॥ भोजनेस्नात्वाष्टशतजपःउपवा
सोवा ॥ मूत्रादिकालेंत्यजादिस्पर्शेतु ॥ दिनमेकंचरेन्मूत्रेपुरीषेचदिनद्वयम् ॥ दिनत्रयंमैथुनेचपानेस्यात्तुचतुष्टयम् ॥ एवंरजस्वला
श्वसूकरशवमद्यभांडादिस्पर्शेपि ॥ चांडालादिस्पर्शेसार्धमेतत ॥ द्विगुणमित्यन्ये ॥ उच्छिष्टस्यतैलाभ्यक्तस्यकृतश्मश्रुकर्मणःकृतमैथुन
स्यचाचमनंविनामूत्रादिकरणेएकोपवासस्त्रिरात्रंवा ॥ ऊर्ध्वोच्छिष्टस्यश्वकाकादिविष्ठास्पर्शेउपवासः ॥ अधरोच्छिष्टेस्नानाम् ॥ उच्छिष्टस्य
सूर्यादिदर्शनेउपवासः ॥ ऊर्ध्वोच्छिष्टस्यपलांडुलशुनादिस्पर्शेत्रिरात्रंकुशजलपानंगायत्रीजपश्च ॥ अकामतउपवासद्वयम् ॥ अधरोच्छि
ष्टस्यतत्स्पर्शेएकउपवासः अनुच्छिष्टस्यतत्स्पर्शेस्नात्वानक्तंसर्वांगावच्छिन्नस्पर्शेएकनक्तमितिकेचित् ॥ सुरायाःपत्स्पर्शेप्येतदेव ॥ जान्वधः
सुरास्पर्शेस्नानम् ॥ ततः आनाभेरुपवासः॥ ततऊर्ध्वस्पर्शेत्रिरात्रम् ॥ अशुचिलशुनादिस्पृष्टस्पर्शनेतु ॥ अशुचिसंस्पृष्टेद्रव्यस्तुएकएवसदुष्य

ति ॥ तंस्पृष्ट्वान्योनदुष्येतसर्वद्रव्येष्वयंविधिरिति ॥ एवंभांडेष्वपिस्पृष्टभांडस्पर्शोयोज्यम् ॥ स्त्रीबालवृद्धमक्षिकागृहमार्जारमूषकादयोनि
त्यंशुद्धाः ॥ उच्छिष्टकालेकर्मानुष्ठानेचमार्जारस्पर्शेस्नानमितिमिताक्षरा ॥ पीतावशिष्टमुखनिर्गततोयपानेमत्याभ्यासेचांद्रंपराकोवा ॥
पीतावशिष्टपात्रांबुपानेवामहस्तेनवापानेतदर्धंत्र्यहंवा ॥ अज्ञानात्सकृच्छूद्रोच्छिष्टभोजनेत्रिरात्रोपवासः ॥ चतुर्थेपंचगव्यपानम् ॥ सप्ता
हंपंचगव्यंकामतः ॥ एतदेवयोषोच्छिष्टभोजनेपिक्षत्रियाद्युच्छिष्टभोजनेपादोनम् ॥ अकामतोभ्यासेचांद्रम् ॥ कामतोद्विगुणमभ्यासे ॥
भार्ययासहभोजनेचदोषाभावआपद्विषयोविवाहविषयोवा ॥ ज्येष्ठभ्रातृपित्राद्युच्छिष्टभक्षणेदोषोन ॥ विप्रोच्छिष्टाशनेएकाहः ॥ काम
तोभ्यासेकृच्छ्रम् ॥ उच्छिष्टमात्रतद्भोजनोत्तरभोजनपात्रेवशिष्टम् ॥ चांडालस्पृष्टकांस्येचांडालाद्युच्छिष्टकांस्येचभोजनेकृच्छ्रम् ॥ ज
लपानेपादकृच्छ्रम् ॥ रजकादावर्धम् ॥ चांडालेनसहैकवृक्षमारुह्यतत्रफलभक्षणेसचैलस्नानम् ॥ चांडालादिस्पृष्टभोजनेत्रिरात्रम् ॥ मत्या
कायम् ॥ चांडालादिहस्तपाचितभोजनेकायंचांद्रंच ॥ तद्धस्तेनभोजनेद्विगुणम् ॥ चाडांलाद्युच्छिष्टभोजनेचतुर्गुणम् ॥ अभ्यासेकृच्छ्रा
ब्दम् ॥ अत्रसर्वचांडालान्नभोजनेपुनःसंस्कारः ॥ चांडालादिदृष्टान्नेतूपवासःपंचगव्यश्च ॥ चांडालादिस्पृष्टांबुपानेउपवासः ॥ तत्स्पृष्टस्पृष्टि
विषयेतदर्धम् ॥ चांडालादिसंस्कारेभोक्तुःपक्षंगोमूत्रंयावकंकृच्छ्रंवा ॥ चांडालादिर्यस्यगृहेअज्ञातस्तिष्ठतितस्यान्नममत्याभुक्त्वाप्राजा
पत्यम् ॥ मत्यापराकः ॥ चांडालादिभांडसंस्पृष्टांबुपानेगोमूत्रयावकंत्रिरात्रंपुनःसंस्कारश्च ॥ शूद्रोदकपानेउपोष्यकुशपलाशबिल्वोदक
पानम् ॥ चांडालादिस्पर्शोत्तरमूत्राद्युत्सर्गेत्रिरात्रमुपवासोजातवेदसजपोवा ॥ रजकादिस्पर्शोत्तरमधरोच्छिष्टेतूपोष्यपंचगव्यम् ॥ रजस्व

लासूतिकाश्वसूकरादिपतितकुष्ठिकुनख्यस्पृश्याशौचिनःस्पृष्ट्वाभोजनेएतत्स्पृष्टान्नेभोजनेचमत्याकायम् ॥ अमत्यार्धम् ॥ कुणिहस्त
विकल्पः ॥ भोजनकालेन्नममेध्यमक्षिकाकेशादिदूषितंचेदनंतरमपःस्पृशेत् ॥ तच्चान्नंभस्मनामृदांबुनावास्पृशेत् ॥ अस्थ्यादिदूषितेस्नानं
घृतप्राशनंच ॥ भोजनकालेदंतपातेचैवम् ॥ रक्तादिदृष्टौतूपवासः ॥ मुखेरक्तदर्शनेत्रिरात्रम् ॥ तद्भक्षणेब्राह्मीरसपानंतादृशजलपा
नंकुशोदकम् ॥ अशक्तएपुनिमित्तेषुब्राह्मीपिबेत् ॥ अमेध्यकेशकीटकादिभिःसहपाचितान्नस्यत्यागः ॥ भक्षणेतूपवासःपंचगव्यंच ॥
वामहस्तदत्तान्नभोजनेएकपंक्तावेकस्मिन्नुत्थितेपश्चाद्भुक्तौचोपवासोनक्तंपंचगव्यंच ॥ मार्जारकाकाखुनकुलगवाद्युच्छिष्टस्याल्पस्यभो
जनेब्राह्मीरसः ॥ अधिकभोजनेउपवासःपूर्वाहार त्रिरात्रम् ॥ कामतःकृच्छ्रपादः ॥ अभ्यासेकृच्छ्रः ॥ श्वोच्छिष्टभोजनेमासंयावकव्र
तम् ॥ विप्रस्यशूद्रगृहभोजनेमनस्तापाच्छुद्धिः ॥ कामतश्चेद्द्रुपदायाःशतंजपः ॥ शूद्रभाजनभिन्नभाजनयोर्भोजनेउपवासःपंचगव्यंच ॥
मत्या त्रिरात्रम् ॥ भिन्नकांस्येअमत्यात्रिरात्रम् ॥ मत्याकायम् ॥ वटार्काश्वत्थकुंभीतिंदुककोविदारकदंबवल्लीपलाशब्रह्मवृक्षपत्रेषु
भोजनेचांद्रम् ॥ पद्मपत्रेवानप्रस्थयत्योश्चांद्रफलम् ॥ अन्येषांचांद्रप्रायश्चित्तम् ॥ दुग्धाज्यादिपेयद्रव्यहस्तस्योच्छिष्टेनस्पर्शेनद्रव्य
सादित्येनाचमनाच्छुद्धिः ॥ चांडालस्योच्छिष्टदानेपिद्विरुपवासः ॥ शूद्रेणच्छिन्नयज्ञोपवीतोब्राह्मणामंत्रेणान्यत्तुपरिधायापवसन्गायत्री
शतंजपेत् ॥ ज्ञानतोद्विगुणम् ॥ एवमन्यत्राप्यनादेशेशतगायत्रीजपः ॥ विप्रेणच्छिन्नयज्ञोपवीतेमहासांतपनद्वयम् ॥ चांडालादिपु
ल्कसम्लेच्छभिल्लपारसीकमहापातकिबौद्धशैवपाशुपतलोकायतिकनास्तिकोन्मत्तांत्यजनापितविक्रमस्थद्विजोदक्यासूतिकापतितशवस्पृष्टिशावसू

निकचैत्ययूपमृतहारककापालिकवनमार्जारस्पर्शेसचैलंस्नानम् ॥ कामतस्त्वग्निस्पर्शनंघृतप्राशनमधिकम् ॥ अत्रशैवपाशुपतौ
वेदविरुद्धतदागमोक्तानुष्ठातारौ ॥ रजकचर्मकव्याधकैवर्तशाकुनिकनटधीवरजालोपजीविनिर्णेजकसौत्रिकशैलूषसर्ववर्णगवनिताचक्रध्वजी
वध्यघातिश्वगर्दभग्रामसूकरकुक्कुटैः शिरोव्यतिरिक्तांगस्पर्शेतदंगक्षालनवस्त्रक्षालनपूर्वकमाचमनम् । शिरःस्पर्शेस्नानम् ॥ कामतःस्पर्शेद्वादश
वारंमृज्जलैः शोधनमधिकम् ॥ इदंसर्वमनातुरस्य ॥ आतुरस्यत्वाचमनमेव ॥ चांडालादिस्पर्शेप्येतत् ॥ शूद्रनिषादस्पर्शेआचमनम् ॥
स्मृत्यर्थसारेतुशूद्रस्पर्शेस्नानम् ॥ निषादस्पर्शेसचैलस्नानमिति ॥ चिरकालंचांडालादिच्छायारोहणेस्नानंघृतप्राशनंच तल्लंघनेप्येवम् ॥
हीनशूद्रस्पर्शेस्नानम् ॥ प्रागुक्तचांडालादिभिर्व्यवहितस्पर्शेस्नानमेव ॥ इदंमतिपूर्वत्वेसचैलमन्यत्राचैलम् ॥ काष्ठादिद्वारेणतत्स्पर्शेयदंगस्प
र्शस्तदंगस्यवस्त्रादेश्चक्षालनमाचमनंच ॥ नौसंक्रमादौनस्पर्शदोषः । सर्वांगावच्छेदेनचांडालादिस्पर्शेत्रिरात्रमुपवासः ॥ चांडालादिभिरेक
शाखारोहणेविप्रस्यसचैलंस्नानम् ॥ कामतोष्टशतजपश्च ॥ अभ्यासेतूपवासपूर्वकंपञ्चगव्यपानम् ॥ एकपाषाणावरोहणेशाखावत् ॥ चांडा
लादिस्पर्शेरात्रावपिस्नानम् ॥ तच्चदिवोद्धृतजलेनाग्निसन्निधौस्वर्णजलेनिक्षिप्यकार्यम् ॥ चांडालशवस्पर्शेकृच्छ्रः ॥ चांडालादिभिर्यान
शय्यासनादौत्रिरात्रोपवासः ॥ विप्रेणचांडालस्यव्रणबंधनाभ्यंजनरुधिरोत्पादनादौविप्रस्यप्राजापत्यम् ॥ चांडालेनविप्रस्यैषुकृतेष्वप्येवम्
अनभ्यासेत्रिरात्रम् ॥ अभ्यक्तस्यचांडालादिस्पर्शेएकोपवासपूर्वकंपंचगव्यम् ॥ चांडालायकामतःक्रतुप्रदर्शनेतन्नृत्यदर्शनेतद्गीतश्रवणे
भैषज्यक्रियायांचाद्विरुपवासः ॥ चांडालादिदर्शनेरविदर्शनपूर्वकंपंचदशप्राणायामाअभ्यासे ॥ अन्यथारविदर्शनमेव ॥ चैतन्यव्यवधानेन

स्पर्शेस्नानम् ॥ काष्ठादिव्यवधानेनस्पर्शेतदंगक्षालनमुक्तम् ॥ एकशाखापाणयोशरोहणेतुस्नानम् ॥ वचनादेतैः संभाषणेष्टोत्तरशतगा
यत्रीजपः ॥ अमत्याचेद्विप्रसंभाषणम् ॥ चांडालाद्युपदेशेप्राजापत्यम् ॥ चांडालकूपतीर्थेनिपवणेत्रिरात्रम् ॥ चांडालैकपथगमनेगायत्री
स्मरणमल्पकालसाध्ये ॥ अन्यथासचैलस्नानम् ॥ चांडालादेः स्ववेश्मन्यवस्थानेत्र्यहम् ॥ दधिसर्पिःपयोभिः सहगोमूत्रयावकपानंत्रिसंध्य
मवगाहनेन ॥ ततस्त्र्यहंदध्ना ॥ त्र्यहंसर्पिषा ॥ ततस्त्र्यहंपयसा ॥ पलत्रयंदधिपयसोः सर्पिषः पलम् ॥ वस्त्राणांजलेनक्षालनम् ॥ मृन्मयानां
त्यागः कार्यः ॥ कुसुंभगुडकार्पासलवणसर्पिर्धान्यानिद्वारेकृत्वावेश्मानिपावकंदद्यात् ॥ ततोब्राह्मणभोजनम् ॥ त्रिंशद्गावोवृषभश्चैकोदक्षि
णा ॥ पुनर्लेपनखननहोमजप्यैः शुद्धिः ॥ अधिकसंसर्गेआधिककल्प्यम् ॥ वृद्धरोगिबालापत्यगर्भिणीनांप्राजापत्यम् ॥ बालानांप्रहरद्वयम
भोजनम् ॥ रजकादिष्वेतदर्धम् ॥ गृहदाहवर्ज्यम् ॥ चांडालगृहप्रवेशेचांडालैः सहवृक्षच्छायायांगृहेवावस्थानेमासंकृच्छ्राभ्यासः ॥ द्विमासं
शूद्रस्य ॥ क्षत्रियवैश्ययोश्चतुस्त्रयः ॥ अनिष्टगंधस्पर्शशब्दरूपवाक्यानामाघ्राणस्पर्शनश्रवणदर्शनकथनेषुरविदर्शनम् ॥ रुद्रनिर्माल्यस्पर्शे
सचैलस्नानम् ॥ शैवसौरनिर्माल्यनैवेद्यभक्षणेचांद्रम् ॥ अभ्यासेद्विगुणम् ॥ अमत्याभ्यासेसांतपनम् ॥ अनापदिहरेरन्यनैवेद्यभक्षणएव
मेव ॥ विष्णोरनिवेदितभोजनेऽर्धकृच्छ्रंप्रायश्चित्तम् ॥ हरेर्निर्माल्यनैवेद्यभक्षणेचांद्रायणफलमितिस्मृत्यर्थसारे ॥ धनहर्तांप्रेतक्रियायाअकर
णेतद्धनंवधेयत्प्रायश्चित्तंतदर्धंकुर्यात ॥ तद्वेतिकेचित् ॥ गोविप्रचांचाडालादिहतोद्बंधगरदाग्निदात्मघातिशृंगिदंष्ट्रिविषवह्निजलविद्युत्सरीसृप
हतसंकरजातिपतितशवस्यवहनदहनोदकदानादिक्रियाकरणेतप्तकृच्छ्रः ॥ अमातिपूर्वंत्वेगोमूत्रयावकाहारेणकृच्छ्रम् ॥ तच्छवस्पर्शमात्रे

केवलेऽश्रुपातेचैकोपवासः ॥ यंकंचित्प्रेतमुद्दिश्यतद्बांधवैः सहाश्रुपातेऽस्थिसंचयनोत्तरंकृतेस्नानम् ॥ ततः पूर्वंतुसचैलंतत् ॥ शूद्रप्रेतानुगमने द्विजस्यस्नानमष्टोत्तरसहस्रगायत्रीजपश्च ॥ द्विजप्रेतानुगमनेऽष्टशतम् ॥ शूद्रस्यतुतत्रस्नानमेव ॥ अनशनंजलाग्निपतनानिसंकल्प्यततो भ्रष्टस्यसंन्यस्तस्यपुनर्गार्हस्थ्यपरिग्रहेणगृहस्थतामिच्छतश्चकृच्छ्रत्रयपूर्वकंचांद्रायणत्रयपूर्वकंवापुनर्जातकर्मादिसंस्कारकरणम् ॥ षण्मा सकृच्छ्राभ्यासपूर्वकंवा ॥ अत्रशक्तिसकृदभ्यासकालाद्यपेक्षयाव्यवस्था ॥ केचिदत्यसमर्थस्यततकृच्छ्रम् ॥ चांद्रायणंतुबलात्कारेणपरप्रेरण यावासंन्यस्तस्येत्याहुः ॥ येत्वात्मघाताद्यशास्त्रीयमरणेनमृतास्तत्पुत्रैश्चांद्रायणततकृच्छ्रद्वयात्मकंप्रायश्चित्तंकृत्वैवतत्क्रियाः कार्याः ॥ क्रोधा दिनात्मत्यागाध्यवसायमात्रेउपवासत्रयम् ॥ अध्यवसायंकतिपयव्यापारंकृत्वास्वतएवनिवृत्तोघृताभ्यक्तोमौनीप्राणायामान्कृत्वागायत्री जपेत्त्रिरात्रमुपवसेत् ॥ अन्येननिवर्त्तितस्यद्विगुणम् ॥ अध्यवसायशस्त्रादिक्षतकरणेप्राजापत्यम् ॥ दृढक्षतेचांद्रम् ॥ चितिभ्रष्टातुयाना शीमोहाद्विचालितातथा । प्राजापत्येनशुद्ध्येतेति ॥ रजस्वलेएकभर्तृके अमत्यावापरस्परस्पृष्टेसद्यः स्नानेनशुद्ध्यतः ॥ असपत्न्यो स्तुसवर्णयोर्योनिगोत्रसंबंधयोरमत्यास्पर्शेतदेवस्नानमात्रम् ॥ मत्यात्वेकउपवासः परेद्युः पंचगव्यपानंच ॥ असंबंधयोः सवर्णयोः स्पर्शेतुम त्याआशुद्धेरनशनम् ॥ अमत्यातुस्नात्वातद्दिनोपवासाच्छुद्धिः ॥ तन्मध्येतुभुक्तौदिनसंख्याकोपवासाः ॥ विप्रशूद्रयोरजस्वलयोः स्प र्शेविप्रायाः कृच्छ्रं शूद्रायाः पादः ॥ शूद्रायानिष्कचतुर्थांशदानमित्यन्ये ॥ अकामतस्तुविप्राया यावच्छुद्धेरनशनम् ॥ शूद्रायाः स्नान मात्रम् ॥ क्षत्रियवैश्ययोस्तत्कालेअभावाच्छुद्धिर्नविचार्यते ॥ तदेवानुच्छिष्टयोः परस्परस्पर्शेऽन्यस्पर्शेवातदेवोच्छिष्टत्वोद्विगुणंबोध्यम् ॥

अथरोच्छिष्टेदृश्वौच्छिष्टाधर्मम् ॥ चांडालाद्यंतावसायिपतितसूत्यादीनांमृत्यास्पर्शेरजस्वलाआशुद्धेर्भुंजानाशुद्ध्यंतेप्रायश्चित्तंकुर्यात् ॥
तच्चप्रथमेह्निस्पर्शेत्रिरात्रम् ॥ द्वितीयेह्निद्विरात्रम् ॥ तृतीयेएकाहः ॥ चतुर्थेनक्तम् ॥ तत्रप्रथमदिनेयदिसाभुंक्तेतदाशुद्ध्यंतेचांद्रम् ॥
द्वितीयादिदिनेषुभोजनेपादपादन्यूनंकल्प्यम् ॥ अमत्याचांडालादिस्पर्शेतुआशुद्धेरुपवासत्रयम् ॥ अत्रप्रथमादिदिनभुक्तौप्रागुक्तात्रि
रात्रादियोज्यम् ॥ सूतकिशौंडिकादीनांश्ववृकशृगालवानरखरोष्ट्रविड्वराहकाककुक्कुटादीनामुच्छिष्टशूद्रस्यचमत्यास्पर्शेतदादिकाहन्यमु
जानायाः शुद्ध्यंतेप्रायश्चित्तम् ॥ तच्चप्रथमेह्निद्विरात्रमभुक्तिः ॥ द्वितीयेएकाहम् ॥ तृतीयेनक्तम् ॥ चतुर्थेएकभुक्तम् ॥ अत्रप्रथ
मादिदिनेषुभुक्तौप्राजापत्यपादपादन्यूनानि ॥ अमत्यास्पर्शेतुआशुद्धेर्भुक्त्यैवशुद्ध्यंत ॥ भुक्तौप्राजापत्यपादादिन्यूनादिक्रमेण ॥
चांडालरजकरजस्वलासूतिकाश्वादिस्पृष्टैः सहमत्यास्पर्शेअमेध्यादिमलोच्छिष्टादिस्पर्शेचतदादिकाहन्यभुंजानायाः शुध्यंतेप्रथमदिनेस्पर्शेउ
पवासः ॥ द्वितीयदिनेनक्तम् ॥ तृतीयेएकभुक्तम् ॥ परतः पंचगव्यम् ॥ प्रथमादिदिनभुक्तौत्रिरात्रैकोपवासनक्तादि ॥ अमत्या
तत्तत्स्पृष्टैः स्पर्शेअभुंजानाशुद्ध्यंत ॥ भुक्तावनशनप्रत्याम्नायाः ॥ उच्छिष्टायाश्चांडालादिस्पृष्टस्पर्शेतदाद्यभुक्त्वात्रिरात्रादि ॥ तेषु
भुक्तौउपवासप्रत्याम्नायाः ॥ उच्छिष्टायाः चांडालादिभिः साक्षात्स्पर्शेतुप्रथमादिदिनेषुषट्चतुर्द्विरात्रंगोमूत्रयावकम् ॥ चतुर्थदिने
स्पर्शेउपवासः ॥ सपत्नीरजस्वलांस्पृष्ट्वारजोदर्शनेस्नात्वाभुंजीत ॥ असपत्नीसवर्णास्पृष्ट्वारजोदर्शनेएकोपवासः ॥ हीनवर्णातांस्पृष्ट्वा
तद्दर्शनेआशुद्धेरभोजनंपंचगव्यंच ॥ चांडालादिसूतिकाशवस्पर्शोत्तररजोदर्शनेआशुद्धेरभुक्तिश्चांद्रंच ॥ एवंभूताशौचाभिः स्पर्शेस्नाना

त्प्राग्रजोदर्शनेआशुद्धेरभोजमेव ॥ भुक्तौतुचांद्रम् ॥ एवंबंधुमरणश्रवणेअमेध्यमलोच्छिष्टादिस्पर्शे च स्नानात्प्राग्रजोदर्शनेपि ॥
रजोदर्शनोत्तरंबंधुमरणश्रवणेपिआशुद्धेरभोजनमेव ॥ उच्छिष्टारजःपश्यंतिचेच्छुद्ध्यंतेत्र्यहम् ॥ अधरोच्छिष्टेत्वेकाहमुपवासः ॥ अत्रसर्व
त्राशक्तायाःसद्यःस्नानेनभोजनम् ॥ शुद्ध्यंतेऽनशनप्रत्याम्नायाः ॥ भोजनकालेरजस्वलायाःश्वांत्यजादिस्पर्शेषड्रात्रंगोमूत्रयावकाहारः ॥
शुद्धिंयावदुपासश्च ॥ रजस्वलायाभुक्तोच्छिष्टद्विजस्पर्शेत्रिरात्रोपवासः ॥ अधरोच्छिष्टतत्संस्पर्शेएकाहः ॥ रजस्वलायाभोजनकालेरजस्व
लांतरदर्शनेआशुद्धेरभोजनम् ॥ भुंजानायाश्चांडालादिदर्शनेउपवासत्रयमपि ॥ एकोपवासोवा ॥ कामतस्तुप्राजापत्यम् ॥ सूतकमृतकयो
र्मध्येरजोदृष्टावस्नात्वाभोजनम् ॥ अशुद्ध्यंतेउपवासः ॥ आर्तवमध्येमृताशौचप्राप्तौआशुद्धेरभोजनम् ॥ अशक्तायाःस्नात्वाभोजनम् ॥
रजस्वलाया व्रतस्था यारजस्वलाभिभाषणेउपवासः ॥ सर्वत्र रजस्वलाया उपवासासामर्थ्ये अफालकृष्टफलाद्याहारांतेपंचगव्यपानम् ॥
एवंगर्भिण्याबालापत्यायाश्च ॥ रजस्वलाया उक्तस्पर्शादिनिमित्तेन संक्रांत्यादिनिमित्तेन वा नैमित्तिकस्नानप्राप्तौ पात्रांतरिततोयेन
तत्कार्यं नतु मज्जनम् ॥ तत्रगात्रमार्जनंवस्त्रपीडनंचनकार्यम् ॥ अन्यद्वस्त्रधारणंचनेत्येके ॥ प्रारब्धेदीर्घव्रतेरजोदृष्टौव्रतलोपोनास्ति ॥ हवि
ष्यभोजनादिशरीरनियमंस्वयंकुर्यात्पूजामन्येनकारयेत् ॥ चतुर्थदिनेचस्नात्वाभुक्तौकार्यम् ॥ मत्याचांद्रम् ॥ तस्याज्वरादौतुचतुर्थे
ह्निअन्यास्त्रीनरोवादशवारंद्वादशवारंवास्पृष्ट्वासचैलंस्नायादाचामेच्च ॥ अंतेवस्त्रत्यागः ॥ ततःशुद्धासा यथाशक्ति दक्षिणां दत्त्वा पुण्याहं वाच
येत् ॥ अयंचातुरमात्रे स्नानप्रकारः ॥ आतुरेपुंसितुमंत्रैरपिमार्जयेत् ॥ तेचसमुद्रज्येष्ठा इतिचतस्रः ॥ आपोहिष्ठेतितिस्रः ॥

शुचीवोह्व्योतीतीत्रः ॥ एतोन्विंद्रमितीतिसक्त्चइति ॥ रजस्वलासूतिकयोर्मरणे तयोर्मलंप्रक्षाल्यस्नापयित्वाकाष्ठवदमंत्रकंद
ग्ध्वाचांद्रायणत्रयंप्रायश्चित्तंकृत्वाऽस्थीनिमंत्रवद्दहेत् ॥ सूतिकायाआद्यत्र्यहेत्र्यब्दमशीतिकृच्छ्रंवा ॥ द्वितीयादित्र्यहेपुन्यूनम् ॥ रजस्वला
जलावगाहाभ्यंगप्रवासदंतधावननखनिकृंतनतांबूलमधुमांसगंधपुष्पदिवास्वापग्रहनक्षत्रनिरीक्षणानिवर्जयेत् ॥ मृन्मये आयसे वाभुंजीते
त्यादिनियमस्थाचस्यात् ॥ ॥ इतिरजस्वलाविधिः ॥ अनुक्तेषु दंडादिना स्तुतिनिंदादिभिश्च प्रायश्चित्तादि कल्प्यम् ॥ ॥ इतिप्र
कीर्णकप्रायश्चित्तानि ॥ अथ मलिनीकरणप्रायश्चित्तानि ॥ ॥ अथजातिभ्रंशकरादीन्यपि तत्रजातिभ्रंशकरेषु कामतः कृतेषु सताहसा
ध्यंमहासांतपनम् ॥ अकामेप्राजापत्यम् ॥ सकृदमत्याकृतयोःसंकरीकरणपात्रीकरणयोःशिशुचांद्रायणम् ॥ अज्ञानतःसंकरीकरणा
नुष्ठानेमासंयावकाशनम् ॥ ज्ञानतःकृच्छ्रशतिकृच्छ्रः ॥ अज्ञानतोऽभ्यासेचांद्रम् ॥ ज्ञानतोऽभ्यासेचांद्रद्वयम् ॥ अज्ञानादपात्रीकरणेतप्त
कृच्छ्रंशतिकृच्छ्रंवा ॥ ज्ञानतोमहासांतपनम् ॥ चांद्रंपूर्ववत् ॥ अज्ञानतोमलिनीकरणानुष्ठानेत्र्यहंतप्तयावकपानम् ॥ ज्ञानेतप्तकृच्छ्रम्
महासांतपनंवा ॥ अज्ञानतोऽभ्यासेकृच्छ्रशतिकृच्छ्रः ॥ ज्ञानतोभ्यासेद्विगुणम् ॥ एतानिजातिभ्रंशकरादिसामान्यप्रायश्चित्तानि यत्र विशेषो
नोक्तस्तत्रकेवलानियोज्यानि ॥ यत्रतुप्रातिस्विकपुक्तानिचिह्नक्ष्यंते तेषुजातिगुणाद्यपेक्षयाएतान्यपियोज्यानि ॥ ॥ इतिजातिभ्रंशकर
संकरीकरणपात्रीकरणमलिनीकरणप्रायश्चित्तानि ॥ ॥ अथोपपातकप्रायश्चित्तानि ॥ ॥ तत्र सामान्यतउपपातकेषु ॥ उपपात
कशुद्धिःस्याद्देवंचांद्रायणेनवा ॥ पयसावापिमासेन पराकेणाथवापुनरिति याज्ञवल्क्योक्तंचतुष्टयम् ॥ एत्वामित्यस्य मासं पंचगव्यपाने

नमासंप्राजापत्याभ्यासेनवामासमातिकृच्छ्रेणवा त्रिरात्रोपवासपूर्वकदशगोसहितवृषभदानेनेत्यर्थः ॥ एतेषां पापाल्पत्वगुरुत्वेदेशका
लवयःशक्त्यादिकंचापेक्ष्यव्यवस्थाबोध्या ॥ कामकृतात्यंताभ्यासेतु गोवधेवक्ष्यमाणत्रैमासिकम् ॥ तथाचोपपातकनिवृत्तौ
गोघ्नवत् ॥ प्रायश्चित्तानिविकल्पितानीतिक्वचित्प्रतिपदोक्तान्यन्यान्युच्यंते ॥ तेषामप्येतैःसहविकल्पोविषमभागोवाबोध्यः ॥ ॥ तत्रगो
वधे ॥ ॥ तत्रब्राह्मणस्वामिकचतुर्हायन्यादीनांगवां शस्त्रलोष्टमुष्टिलगुडपाषाणविषाणादिनासाक्षाज्ज्ञानपूर्वकंकामतोवधेमासं गोमूत्रया
वकयवागूपानम् ॥ शृंगलांगूलखुरामृक्स्त्रावयुतार्द्रहतगोचर्मावृतस्यगोष्ठेवासः ॥ ततोमासद्वयंचतुर्थकालभोजनमक्षारलवणमितम् ॥
मासत्रयमपिगोमूत्रेणस्नानंगोमतीजपःदिवागाःपालयेत् अनुव्रजेदनुतिष्ठेदनुस्वपेच्च ॥ तासुगच्छन्तीषूर्ध्वंतिष्ठन्रजःपिबेत् ॥ रात्रौताः
सेवित्वानत्वावीरासनोभवेत् ॥ भित्त्याद्यनाश्रित्योपवेशनंवीरासनम् ॥ उत्तिष्ठंस्तुदिवातिष्ठेदुपविष्टस्तथानिशि ॥ एतद्वीरासनंनामेत्य
न्ये ॥ चोरव्याघ्रपंकपातादिभयादिभ्यस्ताःसर्वप्राणैर्विमोचयेत् ॥ तासुशीतोष्णवातवर्षपीडितासुत्रातुमक्षमोनात्मनोरक्षणंकुर्यात् ॥ स्वप
रगृहक्षेत्रादावन्नादिकंभक्षयंतीर्नकथयेन्ननिवारयेत्पिबंतंवत्संच ॥ एवंमासत्रयेणतत्पापविमोक्षः ॥ अत्रस्नानांगभूतमंत्रपाठःकालेसंध्यावंदनं
चकार्यम् ॥ एवंब्रह्मघ्नादीनामपिव्रतांगशौचार्थंतद्वत्येव ॥ स्त्रीणांतुगवानुव्रजनगोष्ठशयनगजवाजिनधारणजपादिकंनास्ति ॥ स्त्रीबालवृद्धा
दीनामर्धम् ॥ शूद्रस्यस्त्रीसमानधर्मत्वादर्धमेव ॥ शूद्राश्चस्त्रीसधर्माणःसर्वेसंदंशजाःस्मृता इतिमनूक्तेः ॥ प्रतिलोमजानामप्यर्धम् ॥
वश्यतुल्यशूद्रस्यतुपूर्णमेवेतिस्मृत्यर्थसारे ॥ अज्ञानकृतेप्यर्धम् ॥ अत्रपूर्णव्रतेएकोवृषभोदशगावस्तन्मूल्यंवादक्षिणा ॥ अर्धव्रतेएतदर्धं

मेकागौः ॥ [illegible]अविद्यमानेसर्वस्वंदेयम् ॥ अत्रमासमीपद्गोमूत्रसहितयावकपानेप्राजापत्यद्वयम् ॥ स्नानादीतिकर्त्तव्यतासहितमासो
पवासेशतप्राजापत्यानि ॥ एकादशेस्नातस्त्रिंशन्नक्तैःपञ्चचत्वारिंशत्संकलनयासप्तदशप्राजापत्यानिवासप्तदशधेनवोवातन्मूल्यंवेतिचत्वारः
पक्षाः ॥ मूल्यंचतावद्द्रव्यलभ्यंकांचनंगोवासोश्वोभूमिस्तिलाघृतमन्नंच ॥ यत्रद्रव्यंतत्रोल्लिख्यसंकल्पःकार्यः ॥ चतुर्ष्वपिपक्षेषुदाक्षि
णाप्रागुक्तैव ॥ ज्ञातिकृतेक्षत्रियस्वामिकेतादृशगोवधेषण्मासंतच्चर्मणावृतोगोग्रासदागोव्रतीयवाशीगोभिरेवसंचरन्विमुच्यते ॥ अत्रषाण्मा
सिकव्रतेद्वादशप्राजापत्यानिद्वादशधेनवस्तन्मूल्यंवेतिचत्वारःपक्षाः ॥ दक्षिणायथाशक्तीतिशूलपाणिः ॥ अन्येतुवृषभहंतावृषभंस्त्रीगोहं
तातांदद्यादित्याहुः ॥ वृषभरहितादशगावइतिगौडाः ॥ अज्ञानकृतेत्वर्धम् ॥ बालादीनांचप्राग्वत् ॥ अज्ञानकृतेवैश्यसंबंधिगोवधेमा
संपंचगव्यपानम् ॥ गोष्ठेवासोगवामनुगमनंगोमतीमंत्रजपांतेगोदानम् ॥ अत्रमासव्रतेचत्वारिप्राजापत्यानिचतस्रोधेनवस्तन्मूल्यंवा ॥ पंच
प्राजापत्यानीतिशूलपाणिः ॥ दक्षिणात्वेकाधेनुः ॥ ज्ञानतोद्विगुणमेतत् ॥ अत्रचर्मादिधारणंनास्ति ॥ ज्ञानकृतेशूद्रसंबंधिगोवधेप्राजापत्य
चतुष्टयंचतस्रोधेनवस्तन्मूल्यंवा ॥ यस्यतैलगुणादिव्यापारांतरंकारणांतरनिरपेक्षःकालांतरगवांप्राणमोक्षःसोपिसाक्षाद्घातः ॥ ज्ञानकृतत्वंचगां
ज्ञात्वाएतांहन्मीतिकामनयाहननम् ॥ एतद्रहितमज्ञानकृतत्वम् ॥ तद्राहित्यंचकामनाभावेनतत्प्रापकप्रमात्मकज्ञानाभावेनवा ॥ एवंसर्वत्रबो
ध्यम् ॥ प्रायश्चित्तानंतरंपार्वणविधिनाश्राद्धंकार्यंतच्चजीवत्पितृकेणापि ॥ किंतुपितुःपित्रादिभ्यएव ॥ गोचर्मधारणादिकंप्रायश्चित्तंचगोपत
येगोमूल्यंप्रतिरूपगवांतरंदत्त्वाकार्यम् ॥ पत्रदानेत्विदंलेख्यम् ॥ पूर्वदिनेसशिखंवपनंकृत्वापरदिनेघृतंप्राश्योपोष्यतत्परदिनेस्नानादिकंविधा

यव्रतंतत्प्रतिनिधिंवासंकल्प्यानुष्ठायविप्राययथोक्तांदक्षिणांदत्त्वाअच्छिद्रावधारणंकुर्यात् ॥ ततःपार्वणविधिनाश्राद्धंभोज्यदानंचकार्यम् ॥ य
त्स्वामिकगोवधेयत्प्रायश्चित्तमुक्तंतत्स्वामिकगर्भिणीकपिलाबहुक्षीरादिकगुणकहोमधेन्वादिवधेतद्द्विगुणम् ॥ गर्भिण्यांचसचेतनगर्भयुताया
मेवेदम् ॥ उत्पन्नमात्रदार्ढ्ययुताचेतनांगप्रत्यंगपूर्णगर्भयुतायास्तुक्रमेणसपादंसपादद्वयंसपादत्रयंपूर्णद्विगुणंचगोघ्नव्रतम् ॥ लगुडादिघातेपि
गोजीवनेगर्भमात्रपातेपूर्वोक्तोत्पन्नादिक्रमेणैकपादमर्धपादंत्रिपादंपूर्णव्रतंच ॥ अतिवृद्धातिकृशातिबालातिरोगिणांवधेज्ञानाऽज्ञानकृतेपूर्वोक्ता
र्धम् ॥ अतिवृद्धत्वंतृणादिच्छेदनासामर्थ्यम् ॥ अतिकृशत्वंदोहवहनायोग्यत्वम् ॥ अतिबालत्वंद्विवर्षीयत्वम् ॥ एकवर्षत्रिवर्षयोर्वधेतुपूर्वो
क्तक्रमेणपादंपादत्रयंच ॥ एकप्रयत्ननिष्पन्नानेकगोवधेतुप्रायश्चित्तेद्वैगुण्यम् ॥ एवंगृहदाहादिस्थलेपि ॥ क्रमकृतेत्वनेकगोवधेप्रयत्नभेदेनपाप
भेदात्प्रतिगोवधंयथोक्तप्रायश्चित्तावृत्तिः ॥ बहुभिरेकस्याहननेयत्रयावद्विहितंतस्यैवपादंपादंप्रतिपुरुषंकार्यम् ॥ केचित्तुअज्ञानतःपादंपादम् ॥
ज्ञानतस्त्वर्धमर्धमाहुः ॥ बहुभिरेकव्यापारेणद्वयोर्बहूनांचहननेप्रतिपुरुषंपादद्वयंपादत्रयं चकार्यम् ॥ मिताक्षरातुबहुभिरेकद्विबहुवधेकामकृतेपू
र्णमेवपूर्वोक्तंपादद्विपादादिकमकामकृतवधपरमित्याह ॥ प्रयत्नभेदेतुप्रतिवधंप्रतिपुरुषंप्रायश्चित्तावृत्तिः ॥ द्वाभ्यामेकस्याद्वयोर्वाएकप्रयत्नेनव
धेप्रत्येकंपूर्वमेव ॥ बहूनांवधेतूक्तरीत्याप्रत्येकंद्विगुणम् ॥ अत्यंतव्याधिपीडितमरणावस्थापन्नोन्मत्तांधवपन्यूनगोवधेपादमेव ॥ अधमशूद्रकैवर्त्ता
दिकस्वामिकैकहायनीद्विहायनीत्रिहायनीवधेक्रमेणप्राजापत्यार्धसार्धप्राजापत्यंप्राजापत्यद्वयंचेति ॥ अज्ञानतोर्धमेतत् ॥ गर्भिण्यादौद्विगुणम्
नुर्द्व्यदिक्षिणाशक्त्वादौतदर्धम् ॥ अत्रयादक्षिणोक्तासाप्रायश्चित्तद्वैगुण्येद्विगुणाअर्धेअर्धापादेपादरूपेत्येवंव्यवस्थाबोध्या ॥ अग्निहोत्रिणो

वादपालनान्मृतेष्वपिउत्सृष्टेर्नदोषः ॥ अपालनमृत्युश्च शीतानिलोद्बंधनशून्यागाराद्यपेक्षाजलादिमज्जनकूपादिपतनसर्पविद्युद्धननश्वभ्रपात
व्याघ्रादिभक्षणकृतः ॥ एतच्चपालनासमर्पणे । तत्समर्पणे तुपालकस्यैवदोषः ॥ परंतुयावत्कालंपालकाधीनतातावदेव ॥ अशक्तपालकसम
र्पणेतुस्वामिनएवदोषः ॥ एवमिक्षुतैलयंत्रार्थंनियुज्यसंनिधावीक्षणेदैवाद्ग्रहदाहगृहभंगाभ्यांगोमरणेघंटाभरणादिदोषेणगवांविपत्तौचार्धप्रा
जापत्यम् ॥ यदिगोःशक्तिमनपेक्ष्यदत्तभारादिदोषेणमरणंतदाप्राजापत्यम् ॥ शक्तपालकस्यसंनिधिसत्त्वेकांतारदुर्गगृहदाहावटेषुलतापाशा
बद्धावृतस्यगोर्यदिमरणंतदाप्राजापत्यपादएवेत्याहुः ॥ तथात्रिहायनपर्यंतवत्सस्यारक्षणेपिपादएव ॥ गोमांसभक्षकायगोविक्रयेचांद्रायणम् ॥
यदितस्मैपालकेनधेनवोविक्रीयंतेतदातत्तत्स्वामिकगोवधप्रायश्चित्तंप्राजापत्यादिकम् ॥ पालकबहुत्वेतुपालकानामविभक्तानांसर्वेषा
मेकम् ॥ विभक्तानांतुपादंपादम् ॥ बहूनांगवामपालननिमित्तवधेपालकस्यद्विगुणम् ॥ तत्रापिबहुकर्तृचेत्प्रत्येकंद्विगुणम् ॥ पालकस्यद्र
व्याभावेस्वामिनाद्रव्यंदत्त्वाकारणीयम् ॥ म्लेच्छपालकत्वेतुस्वामिनाकर्तव्यम् ॥ ॥ अथौषधाद्युपचारे ॥ ॥ दाहच्छेदशिराभेदप्रयो
गैरुपकुर्वतः ॥ द्विजानांगोहितार्थंचप्रायश्चित्तंमृतौनहि ॥ इदंचाज्ञानिनआदरेणयथावदुपचारेएव ॥ शास्त्रस्यानादरेणायथावदुपचा
रेच ॥ प्राजापत्यव्रतमंतेधेनुर्दक्षिणा ॥ भिषगपिविरुद्धौषधदानेनाकामतोप्येकगोवधेद्विगुणंगोवधप्रायश्चित्तंचरेदितिमिताक्षरादौ ॥
आंतिदाहेप्येतदेवेतिकेचित् ॥ एवंयंत्रणेगोचिकित्सार्थंगूढगर्भविमोचनेऔषधस्नेहाहारदानेश्वगवादिमृतौनप्रायश्चित्तम् ॥ इदम
पिस्वेच्छयागृह्यमाणएव ॥ हठादधिकंदीयमानमाहारस्नेहादिकंमृतिहेतुश्चेत्पादकृच्छ्रः ॥ एवंनगरग्रामदाहेषुअबद्धानांमृतौपालकस्यस्वामि

नश्चनदोषः ॥ बंधनेतुपादकृच्छ्रः ॥ एवंव्याधियुक्तानांदंडाभिघातादिनामूर्च्छयाभिपतनेऽनंतरगमनग्रासतोयपानैस्तदानीतनताडनस्य
मरणहेतुत्वाभावनिश्चयेपूर्वव्याधिनष्टानांनप्रायश्चित्तम् ॥ यदिपूर्वव्याधियुतापिप्रहारजनितपीडयैवग्रासादिकंनकृत्वैवम्रियेततदार्धपादंवा
प्रायश्चित्तंभवत्येव ॥ शालादौगवांमशकादिनिवृत्त्यर्थधूमायाग्निप्रज्वाल्यपालकादेस्तत्रास्थितौदैवात्तदाग्निनाबंधनरहितस्यगवादेर्मरणे
दोषाभावः ॥ तत्रानवस्थितौबंधनेवापादकृच्छ्रः ॥ त्रिशूलादिस्थिरतराचिह्नकरणेनगोण्यादिवाहनादिभिश्चर्मनिर्मोचनेदोषाभावः ॥ मत्तागौ
र्यदिनिवारयंतंपालकमतिक्रम्यगर्तकूपादौपतनादिनाम्रियतेतदानदोषः ॥ शंकारहितेवनादौसतिसन्निधौपालकेऽकस्मादागतव्याघ्रादिना
मरणेपितदानदोषः ॥ पालकस्यतत्रासत्त्वेतुदोषएव ॥ एवंराजसैन्यादिभिः शरादिभिर्ग्रामघातराष्ट्रघातवेश्मभंगातिवृष्ट्यिव्याध्युपद्रववृक्षा
दिपतनादिभिरुपद्रुतानामबद्धानांपालकसत्त्वेमरणेदोषोन ॥ पालकासत्त्वेबंधनेचदोषादुक्तपापः प्रायश्चित्तम् ॥ गोहरणेतु ॥ अश्वगोभू
मिकन्याश्चहृत्वाचांद्रायणंचरेत् ॥ क्षुद्रान्पशून्समाहृत्यप्राजापत्यंसमाचरेत् ॥ इतिजाबाल्युक्तंप्रायश्चित्तम् ॥ गोवधोक्तंसर्ववृषवधेपि ॥
स्त्रीत्वस्याविवक्षितत्वात् ॥ दानंतुस्त्रीगवीनामेव ॥ विधेयगतत्वेनस्त्रीत्वस्याविवक्षितत्वादितिमयूखे ॥ अत्रवपनेविशेषः ॥ पुंसांगोवधोक्त
प्रायश्चित्तपादेकंठादधःस्थितांगलोम्नांवपनम् ॥ अर्धप्रायश्चित्तेश्मश्रुणामंगरोम्णांचशिरःकेशवर्जम् ॥ त्रिपादेंगरोमश्मश्रुशिरःकेशानांशि
खावर्जम् ॥ पूर्णप्रायश्चित्तेसशिखंवपनम् ॥ स्त्रीणांतुसधवानांवपनंनक्वापिप्रायश्चित्ते ॥ किंतुसर्वान्केशान्समुद्धृत्यद्व्यंगुलच्छेदनमात्रंकार्यमिति
स्मृत्यर्थसारे ॥ ॥ इतिगोवधप्रायश्चित्तनिर्णयः ॥ ॥ अथव्रात्यप्रायश्चित्तनिर्णयः ॥ ॥ व्रात्यश्चपंचदशैकाविंशतित्रयोविंशतिवर्षरूपेषोडशद्वा

विंशतिचतुर्विंशतिवर्षरूपेवाब्राह्मणक्षत्रियवैश्योपनयनकालेउपनयनाभावात् ॥ तत्रयस्योपनयनेन्नाद्यभावेनतत्कालातिक्रमस्तस्यसाधार
णोक्तचांद्रायणादिचतुष्टयान्यतमंशक्त्यनुसारेणकृत्वोपनयनंकार्यम् ॥ अनापदियस्यतदातिक्रमस्तस्यमानवंत्रैमासिकम् ॥ तदसमर्थस्यसशि
खवपनपूर्वकमेवविंशतिरात्रंप्रसृतिमात्रंयावकपानंपंचविप्रभोजनंच ॥ यस्यषोडशादिवर्षादूर्ध्वमप्यनापदिवुद्ध्यातदतिक्रमस्तेनमासद्वयंया
वकपानंमासंपयोमासार्धमामिक्षाष्टघृतंषड्रात्रमयाचितंत्रिरात्रमभ्भक्षताअहोरात्रमुपवासइत्युद्दालकव्रतंकार्यम् ॥ यस्यपितृपितामहावनुप
नीतौतस्यसंवत्सरंभैक्ष्याशनगुरुशुश्रूषादिरूपब्रह्मचर्यव्रतम् ॥ ततउपनयनम् ॥ ततोयावतांपुरुषाणामुपनयनंतावत्संख्याकवर्षपर्यंतंप्राय
श्चित्तार्थंयदंतियच्चदूरकइत्यादिसप्तपावमानीभिर्येनदेवाः पवित्रेणेतियज्ञपवित्राख्येन कयानश्चित्रआभुवइतिसामपवित्राख्येनहंसःशुचिषदि
त्यनेनेत्येतैर्मंत्रैः स्नानंततोध्याप्यता॥ यस्यतुप्रपितामहादीनामुपनयनंनानुस्मर्यंते ॥ तस्यद्वादशवार्षिकंपूर्वोक्तंब्रह्मचर्यम् ॥ ततउपनयनम् ॥
ततःपुरुषसंख्याकाब्दपर्यंतमुक्तमंत्रैःस्नानम् ॥ तदनंतरमप्यस्यगार्हस्थ्यमात्रोपदेशेनाध्यापनंनापिव्यवहारः ॥ तज्जन्येतुस्वकालातिक्रमप्राय
श्चित्तमात्रंकृत्वायथाकालमष्टमादिवर्षसंस्कारः अस्याध्ययनाधिकंभवति ॥ ॥ इतिव्रात्यप्रायश्चित्तम् ॥ ॥ अथ स्तेयप्रायश्चित्तम् ॥
स्तेयंचौर्यम् ॥ स्वर्णादिचौर्यस्यमहापापत्वात् ॥ तत्रविप्रस्यविप्रस्वामिकंदश
कुंभपरिमितंधान्यंवातत्परिमितंतंडुलाद्यन्नंवातत्तुल्यमूल्यंवाताम्ररजतादिकंवाअमत्यापहृत्यत्रैमासिकंगोवधव्रतम् ॥ गोचमंगोसेवादित
द्विशेषरहितंकार्यम् ॥ मत्यभावेवाकृच्छ्राब्दम् ॥ क्षत्रियादेहृतुः पादपादह्रासः क्षत्रियस्वस्यतीव्रताकामतोपहारेषाण्मासिकम् ॥ वैश्यस्वे

त्रैमासिकम् ॥ शूद्रस्वेचांद्रम् ॥ कुंभपरिमाणंतु ॥ अष्टमुष्टिभवेत्किंचित्किंचिदष्टौचपुष्कलम् ॥ पुष्कलानिचचत्वारिआढकः परिकीर्तितः ॥
आढकानिचचत्वारिद्रोणइत्यभिधीयते ॥ दशद्रोणाभवेत्खारीकुंभोपिद्रोणविंशातिरिति ॥ स्मृत्यर्थसारेतुकुंभः पंचसहस्रपलपरिमाणइति ॥
सार्द्धशतद्वयपणमूल्यक्षत्रियस्वामिकगृहक्षेत्रभूमिवापीकूपतडागादिपानीयरसानां तत्स्वामिकस्यानिक्षेपस्य तावन्मूल्यरजतवस्त्ररत्नादेश्वनारी
नराश्वानांचापहारेचांद्रम्॥वैश्यशूद्रस्वेतादृशेपूर्वोक्तक्रमेणचांद्रार्धतत्पादौ॥विप्रस्वेतादृशेस्वर्णस्तेयसमम् ॥ तेनषडब्दम् ॥ स्वर्णस्तेयसम
वदितिस्मृत्यर्थसारे ॥ अत्रषडब्दन्यूनंकल्प्यम् ॥ त्रपुसीसलोहादिद्रव्याणामल्पप्रयोजनानांसार्द्धशतद्वयपणपंचदशांशमितानांहृतेः सांत
पनम् ॥ एकवारभोजनपर्याप्तानांभक्ष्यभोज्यपानादीनामपहारेतत्सममूल्यकानांयानशय्यासनोपानत्पुष्पफलमूलपर्णमृद्भांडमधुमांसौषध
सुगंधद्रव्याणामपहारेपंचगव्येनाहोरात्रम् ॥ द्विवारभोजनपर्याप्ततदपहारेत्रिरात्रंतत् ॥ त्रिरात्रभोजनपर्याप्ताहारमूल्येप्येतदेव ॥ तृण
काष्ठद्रुमशुष्कान्नगुडतैलचर्मणांत्रिभोजनमूल्यानांहरणेप्येतादितिस्मृत्यर्थसारे ॥ द्वादशाहारपर्याप्तब्राह्मणस्वामिकमणिमुक्ताप्रवालताम्ररज
तशंखशुक्तिलोहकांस्योपलापहारे द्वादशाहंकणान्नता ॥ त्रिभोजनपर्याप्ताहारमूल्यकार्पासकीटजजीर्णाद्विशफैकशफपशुरज्जुपक्षिणामपहारे
एकउपवासस्त्र्यहंपयःपानंवा ॥ गजाश्वभूमिकन्याहरणेषडुपवासाः ॥ अभ्यासेचांद्रायणम् ॥ षण्मासंगोमूत्रयावकाहारोवा ॥ एवंपुस्तकादि
चौर्येष्वपिह्रियमाणाल्पबहुत्वाभ्यांप्रायश्चित्तादिकल्प्यम् ॥ देवद्रव्यापहारेऽब्दम् ॥ यस्यवर्णस्यतृप्तिंयोहरेत्सतद्वर्णवधप्रायश्चित्तंपादोनंकु
र्यात् ॥ अत्रसर्वत्रसकृदभ्यासद्रव्याल्पत्वमहत्त्वेदेशकालस्वाम्यपहर्तृगुणवैगुण्याद्यपेक्ष्यप्रायश्चित्तगुरुलघुताज्ञेया ॥ इदंचप्रायश्चित्तमपहृत

द्रव्यस्वामिनेतद्द्रव्यंदत्त्वैवकार्यं सतिस्वामिनि ॥ वैदिकाग्निभ्यः काष्ठंगवेतृणंहर्तुः पांथद्विजस्येक्षुद्वयंमूलकद्वयंचणकव्रीहिगोधूमयवमुद्गमापा
णांमुष्टिंक्षेत्राद्धरतः स्वाम्यनिषिद्धस्यस्तेयदोषोनेतिमयूखे ॥ ॥ इतिस्तेयप्रायश्चित्तानि ॥ ॥ अथऋणानपाकरणेप्रायश्चित्तम् ॥ यज्ञाध्य
यनप्रजारूपाणांदेवर्षिपितृऋणानामनपाकरणमात्मपितृपितामहादिभिरुत्तमर्णाद्गृहीतानांधनानामदानंचतत् ॥ तत्रयज्ञब्रह्मचर्याद्यकरण
रूपदेवऋष्यादिऋणेउपपातकसामान्योक्तचांद्रादिष्वेकंशक्त्याकार्यम् ॥ सर्वथातदसंभवेवर्षातेवैश्वानरेष्टिः कार्या ॥ साचसत्याधानादिनातद
धिकारे तदकरणेप्रतिवर्षंकार्यम् ॥ उत्तमर्णऋणादानेतुकालविलंबादिप्रयुक्तमेतच्चांद्राद्यन्यतमम् ॥ प्रायश्चित्तमुत्तमर्णायतद्धनंदत्त्वाकार्यंस
तिधने ॥ ॥ अथानाहिताग्निताप्रायश्चित्तम् ॥ साचसत्यधिकारेऽग्न्याधानाभावः ॥ तत्रवर्षातपूर्तौप्रतिमासंत्रिरात्रम्॥ततः प्रत्यब्दंचांद्रादि
ष्वेकंशक्त्याकार्यम् । अनापदितुत्रैमासिकम् ॥ पितर्यनग्नावाधातुरयपरियष्टुश्चसुतस्यव्रात्यपशुः कार्यः ॥ औपासनाग्न्यसंधानेआवर्षप्रतिमा
समुपवासः ॥ अब्देचांद्रादिष्वेकम् ॥ यद्वाप्रथमवर्षेकृच्छ्रः ॥ द्वितीयेऽतिकृच्छ्रः ॥ तृतीयेकृच्छ्रातिकृच्छ्रौ ॥ ततश्चांद्रम् ॥ मयू
खेइदंज्येष्ठस्यैव तच्चदायकालदायाद्यकालगृहपतिमरणरूपकालत्रयातिक्रमे ॥ कनिष्ठस्यतु सतिज्येष्ठेऔपासनाग्निरहितेअनधिकारादेवन
प्रायश्चित्तम् ॥ एवंपितरिताहशेसुतस्यापि ॥ ॥ अथापण्यविक्रयेप्रायश्चित्तम् ॥ ॥ अपण्यस्यलवणादेर्विक्रयोहिंसः ॥ तत्रसुरा
विक्रयेसौम्यकृच्छ्रचतुष्टयम् ॥ गुडतिलपुष्पफलमूलपक्वान्नविक्रयेसौम्यकृच्छ्रः ॥ मत्याप्राजापत्यम् ॥ लाक्षालवणमधुमांसतैलक्षीरद
धितक्रघृतगंधचर्मरक्तवस्त्रातिलाद्यन्यतमविक्रयेचांद्रम् ॥ मत्याभ्यासेतत्रयम् ॥ अमत्यासकृदुपवासः ॥ पयःपायसापूपेक्षुरसगुडख

डादीनांस्नेहपक्वानांचविक्रयेपराकः ॥ पूगमंजिष्ठाखर्जूरद्राक्षाणांप्राजापत्यम् ॥ पनसस्यत्रिदिनम् ॥ कदलीनीरनालिकेरजंबीरबीजपूरक
नारंगाणांपादकृच्छ्रः ॥ कर्पूरादेरर्धकृच्छ्रः ॥ कस्तूरिकादीनांकृच्छ्रः ॥ ऊर्णाकेशकेसरिणांभूधेन्वनडुहाश्मशस्त्राणांचविक्रयेचांद्रम् ॥ अभक्ष्य
मांसतदस्थिशृंगनखशुक्तिहिंगुगुग्गुलसर्वरसहरितालमनःशिलांजनलवणक्षारमणिमुक्ताप्रवालवैणववेणुमृन्मयानांतप्तकृच्छ्रः ॥ अमत्यास
कृदुपवासः ॥ वृषशस्त्रगोनीलीकौशेयविक्रयेप्राजापत्यम् ॥ कृष्णपीतादिवस्त्रकृष्णाजिनकृष्णवस्तुविक्रयेत्र्यहम् ॥ गजविक्रयेचांद्रम् ॥ खरा
श्वाश्वतरखरवृषभाणांविक्रयेपराकः ॥ नारीविक्रयेचांद्रम् ॥ पुरुषविक्रयेतद्द्वयम् ॥ कन्यापुत्रविक्रयेतद्द्वयंद्विगुणम् ॥ एकाहाद्वेदविक्रयेचांद्रम् ॥
अंगानांविक्रयेपराकः ॥ स्मृतीनांकृच्छ्रम् ॥ इतिहासपुराणानांसांतपनम् ॥ रहस्यपञ्चरात्राणांकृच्छ्रः ॥ इतरविद्यामात्रस्य पादकृच्छ्रः ॥
सोमविक्रयेउक्तप्राण्यतिरिक्तप्राणिविक्रयेचतप्तकृच्छ्रःपुनरुपनयनंच ॥ तुषकपालभस्मरोमपिण्याकानांप्राजापत्यम् ॥ मधूच्छिष्टत्रपु
सीसकृष्णलोहोदुंबरखड्गपात्रगोधूमविक्रयेमहासांतपनम् ॥ आरामतडागोदपानपुष्करिणीसुकृतविक्रयेत्रिषवणस्नायीअधःशायीचतुर्थका
लाहारोगायत्रीदशसहस्रंजपन्संवत्सरेणशुद्ध्येत ॥ हीनमानहीनोन्मानाभ्यांविक्रयेऽन्यमिश्रितान्यवस्तुविक्रयेचैवम् ॥ तत्रमानंप्रस्थादि ॥
उन्मानंतुलादि ॥ विषमतुलादिधारणेअर्धकृच्छ्रः ॥ निगडादिविक्रयेप्राजापत्यम् ॥ प्रतिश्रयोद्यानसभाप्रपादिविक्रयेतप्तकृच्छ्रः ॥
अत्रसर्वत्रदंडशास्त्रपर्यालोचनेनप्रायश्चित्तन्यूनाधिक्यंयोज्यम् ॥ तिलतैलदधिक्षौद्रलवणद्राक्षामद्यमांसपक्वान्नस्त्रीपुरुषहस्त्यश्वगोवृषभगं
धरसक्षौमकृष्णाजिनसोमनीलीविक्रयात्सद्यःपतति विप्रः ॥ प्रायश्चित्तंत्वकामकृते ॥ एतत्सर्वमापदिवैश्यवृत्त्याजीवतोविप्रस्यैव ॥

अनापदितुवैश्यभिन्नानांसर्वेषामेव ॥ शूलपाणिस्तु ॥ आपदिशूद्रस्यैवदोषाभावः ॥ क्षत्रियस्यापिभवत्येवप्रायश्चित्तमित्याह ॥
शूद्रस्यापद्यपिमधुचर्मलाक्षासुरामांसानांविक्रयेदोषएव ॥ तिलगोधूमादीनांतुक्रीतानांविक्रयएवदोषः ॥ कृष्युत्पादितानांविक्रयेतुने
तिबोध्यम् ॥ इदंचप्रायश्चित्तजातंतत्तद्विक्रयार्जितधनोत्सर्गपूर्वकंकार्यमनापदि ॥ इत्यपण्यविक्रयेप्रायश्चित्तम् ॥ अथपरिवेदनेप्राय
श्चित्तम् ॥ ॥ अकृतविवाहोऽग्रजोऽनुजेनप्रागात्मनोविवाहंकुर्वतातिक्रांतःसपरिवित्तिःसचप्राजापत्यम् ॥ चत्वारिकनीयसा ॥ पूर्वंपरिणीतां
तेनदत्तामुद्वहेत् ॥ तस्यैवाहिसाभार्या नानुजस्य ॥ अशास्त्रीयत्वात्तद्विवाहस्य ॥ अनुजश्चव्युत्क्रमेणविवाहजन्यदोषवान्परिविदानःप
रिवेत्तोच्यते ॥ अयममत्याचेत्तदाचांद्रादिष्वेकंकृत्वोढांज्येष्ठायदत्त्वापुनरन्यामुद्वहेत् ॥ यद्वा तामेवब्रह्मचर्याहृतभैक्ष्यवत् गुरुपरिभव
परिहारार्थंनिवेद्यतेनानुज्ञातांपुनस्तामुद्वहेत् ॥ इदमेवयुक्तम् ॥ मत्याचेत् त्रैमासिकम् ॥ अकामतश्चेत्कृच्छ्रातिकृच्छ्रौकृत्वैवकुर्यात् ॥
इदंकन्यापित्रादिदत्तोद्वाहेदेशांतरस्थितेज्येष्ठेकृतविवाहोऽसावितिभ्रांतिमतःपरिवेत्तुः ॥ कन्यापित्राद्यपरिज्ञानेतत्पित्रादिभिर्दत्ताबलात्का
रादिनाकामतोज्ञात्वाचोद्वोढुरब्दंप्राजापत्यादिप्रायश्चित्तपूर्वकंपूर्वोक्तम् ॥ परिवेत्तुरब्दविषयेपरिवित्तस्यज्येष्ठस्यद्वौकृच्छ्रौपरिवेदनीयायाः
कृच्छ्रः पित्रादेर्दातुःकृच्छ्रातिकृच्छ्रौ ॥ परिकर्त्तांतद्याजकस्तस्यचांद्रायणम्॥ इदंनिर्गुणेज्येष्ठे ॥गुणवतिज्येष्ठेबुद्धिपूर्वकपरिवेदनेपरिवेत्त्रादयः पारि
कर्त्तांताःसर्वेपतिताःसंवत्सरंप्राजापत्यैःशुद्ध्येयुः ॥ दत्तकादीनांतुनायंदोषः ॥ भिन्नोदरेचदत्तेचपितृव्यतनयेतथा ॥ दाराग्निहोत्रसंयो
गेनदोषःपरिवेदनइतिगौतमस्मरणात् ॥ भिन्नोदरइतिसापत्नभ्रातृविषयम् ॥ दत्तेचेतिजनककुलेज्येष्ठभ्रातृसत्त्वेपिनदत्तकस्यविवाहादोषःपरि

वेत्तृत्वंनापिज्येष्ठस्यपरिवित्तित्वमित्यर्थः ॥ पितृव्यतनयेइतिदेवरेणोत्पादितस्यभ्रातुःक्षेत्रजपुत्रस्याविवाहादौदेवरपुत्रादेः परिवेत्तृत्वादिकं
नेत्यर्थः ॥ एवंज्येष्ठायामनूढायांयाकनिष्ठाविवाहितासाग्रेदिधिषुःज्येष्ठातुदिधिषुः ॥ तत्राग्रेदिधिषुपतिःकृच्छ्रंकृत्वापुनस्तामेवोद्वहेत् ॥
दिधिषुपतिस्तुकृच्छ्रातिकृच्छ्रौकृत्वाकनीयस्याःपत्येतांनिवेद्यतस्मैनत्वातेनानुज्ञातस्तांपुनरुद्वाहयेत् ॥ एवंकन्ययोर्योज्यम् ॥ ज्ञानकाम
कारबलात्कारादिविषयेपूर्वोक्तसंवत्सरादिकंव्यवस्थयायोज्यम् ॥ अथानाहिताग्नितायांप्रायश्चित्तम् ॥ अनाहिताग्नौज्येष्ठेतुकनीयानादधीतचे
त् ॥ पर्याधाताकनिष्ठःस्याज्ज्येष्ठःपर्याहितःस्मृतः ॥ तयोःसंवत्सरव्रतम्॥इदंज्ञात्वाकामतःकरणे॥ अन्यथाप्राग्वद्योज्यम् ॥क्लीबवृषलीपतिविर
क्तसंन्यस्तातिविरोगिजडमूकगरदबधिरकुब्जवामनपंगुवृद्धतस्करविवाहानिच्छुशूद्रतुल्यमृतभार्याणांपरिवेदनेदोषोन ॥ एवंधनेकृष्यादौवे
श्यायांवासक्त्यादाराग्निहोत्रानिच्छुपरिवेदनेपि ॥ धनधर्मविद्यार्जनार्थंदेशांतरस्थेज्येष्ठेद्वादशवर्षप्रतीक्षा ॥ कार्यांतरार्थंदेशांतरस्थेदशव
र्षम् ॥ इतिपरिवेदनप्रायश्चित्तम् ॥ अथभृतकाध्ययनादौप्रायश्चित्तम् ॥ ॥ पणपूर्वकाध्यापकादध्ययनग्रहणंभृतकाध्ययनम् ॥ पणपूर्वकम
ध्यापनंचभृतकाध्यापनम् ॥ तत्कर्तारौपयसाब्राह्मीसुवर्चलांत्रीन्पक्षान्नियतंपिबेताम् ॥ अनापदिशक्त्याद्यपेक्षयाचांद्रादिष्वेकम् ॥ अनुप्रयो
गप्रदानेप्येवम् ॥ उत्कर्षहेतोरधीयानस्यकिंपठसिनाशितंत्वयेत्येवंपर्यनुयोगोनुप्रयोगदानम् ॥ अनुप्रयोगप्रदानाभ्यासेपातित्यमाहुः ॥
इतिभृतकाध्ययनादिप्रायश्चित्तम् ॥ ॥ अथपारदार्यप्रायश्चित्तम् ॥ ॥ पारदार्यंचगुरुतल्पंतदातिदेशिकतत्समव्यतिरिक्तपरस्त्रीगम
नरूपम् ॥ ॥ पुरुषांतराव्यभिचारितांजातिमात्रविप्रामृतौविप्रोगत्वापूर्वोक्तंवार्षिकंब्रह्मचर्यव्रतम् ॥ धर्माधिकमंशीलत्वादिगुणशालिनींता

दृशीगंतुविप्रस्यद्विवार्षिकंप्रायश्चित्तम् ॥ श्रोतियपत्न्यांताहृश्यांत्रिवार्षिकंतत् ॥ ताभिर्यदिद्रव्यंदत्तंभवेत्तर्हितत्संत्यज्यप्रायश्चित्तम् ॥ द्वित्रि
चतुर्वारगमनेक्रमेणद्वित्रिचतुर्गुणम् ॥ अग्रेचपातित्यम् ॥ एवंद्वितीयतृतीयादिगमनेपि ॥ शूलपाणिमिताक्षरादयस्तु ॥ एकस्यामेवद्वित्रिवार
गमनेपूर्वोक्तमेवपादहान्येतिप्रोचुः । क्षत्रियादीनांस्वस्ववर्णासुगमनेपादहानिः ॥ विप्रस्यक्षत्रियादिस्त्रीषुद्विवार्षिकत्रिवार्षिकपाण्मासिकानिगुण
वतीषु ॥ शूद्रस्यपरकीयायांगुणवत्यांशूद्र्यांगंतुःपाण्मासिकम् ॥ अकामतःसर्वत्रैतदर्धम् ॥ स्वभर्तृव्यतिरिक्तसवर्णैकपुरुषगामिन्यांगंतुः
पूर्वोक्तमेवपादहान्याकार्यम् ॥ पुरुषद्वयगामिन्यांद्विपादहानिः ॥ पुरुषत्रयगामिन्यांत्रिपादहानिः ॥ पुरुषचतुष्टयगामिन्यांस्वैरिणीसंज्ञका
यांविप्रायांगंतुस्त्र्यहोपवासपूर्वकंघृतपात्रदानम् ॥ ताहृश्यांक्षत्रियायामुपवासत्रयपूर्वकमाढकयवदानम् ॥ वैश्यायांगंताचतुर्थकालाहारोविप्रा
न्भोजयेत् ॥ शूद्रायांगंतुःसचैलस्नानपूर्वकमुदकुंभदानम् ॥ पञ्चमादिगामिन्यांबंधकीसंज्ञायामष्टमुष्टियवदानम् ॥ ताहृश्यांशूद्रायांविप्रस्यो
दकुंभदानम् ॥ क्षत्रियायांधेनुदानम् ॥ वैश्यायांवस्त्रदानम् ॥ अभ्यासेप्रायश्चित्तावृत्तिः ॥गौडास्तुविप्रादेःक्षत्रियादिगमनस्यैवार्धार्धादिहानिमा
हुः ॥ अनृतौजातिमात्रविप्रांविप्रोगत्वामानवंत्रैमासिकंकुर्यात् ॥ ईदृशक्षत्रियादिस्त्रीषुक्रमेणद्वैमासिकचांद्रायणमासिकानि ॥ क्षत्रियादीनांस्वस्व
वर्णास्वनृतौगमनेद्वैमासिकान्येव ॥ आसुगर्भोत्पत्तौतुतत्तद्विषयेसर्वोक्तमेवद्विगुणंकार्यम् । शूद्रायांगर्भोत्पत्तौतुत्रीणिवर्षाणिचतुर्थकालेनक्तं
भुंजीत ॥ विप्रस्यानिच्छंतीषुविप्रादिस्त्रीषुगंतुरनुक्रमेणगोघ्नत्रैमासिकंचांद्रमासिकानि ॥ गोभिन्नासुतिर्यग्योनिषुमहिषीगर्दभादिषुगमनेसचै
लस्नानंभोग्यतृणभारदानंच ॥ एकउपवासोवा ॥ कामतोभ्यासेकृच्छ्रपादम् ॥ अत्यंताभ्यासेप्राजापत्यम् ॥ शुनीगमनाभ्यासेअतिकृच्छ्रः ॥

गविसकृद्गमनेऽपवासत्रयपूर्वकंगोदानम् ॥ कामतस्तुत्रैमासिकंगोघ्नव्रतम् ॥ कामतोभ्यासेप्राजापत्यंत्रैमासिकंच ॥ कामतोऽत्यंताभ्यासेसं
वत्सरव्रतम् ॥ आजन्मात्यंताभ्यासेगुरुतल्पसमम् ॥ रजकचर्मकारबुरुडकैवर्तमेदभिल्लाः सप्तांतेवसायिनस्तेषांस्त्रीषुव्याधशैलूषनटवेणुजीविका
पालकम्लेच्छादिस्त्रीषुचविप्रस्यचकामतः सकृद्गमनेचांद्रद्वयम् ॥ अमत्यापराकश्चांद्रंवा ॥ रेतःसेकात्प्राङ्निवृत्तौकायम् ॥ एतदभ्यासेतुकाया
वृत्तिः ॥ आस्वेवकामतोभ्यासेकृच्छ्राब्दम् ॥ अज्ञानात्तथाभ्यासेचांद्रद्वयम् ॥ गर्भोत्पत्तौत्रैवार्षिकम् ॥ अज्ञानतआसुचतुर्विंशतिवारगमनात्पा
तित्यम् ॥ ज्ञानतस्तदर्धादितिगौडाः ॥ संवत्सरादर्वाग्ज्ञानतोद्वादशधागमनादज्ञानतश्चतुर्विंशतिवारंगमनाभ्यासेचद्वौमासौभैक्ष्यभुग्द्वौमासौ
गोमूत्रयावकभुग्द्वौमासौ पंचगव्याशी एवंषण्मासाच्छुद्ध्यति ॥ अंत्यजवच्छौंडिकादिस्त्रीषुयोज्यम् ॥ अमत्यासकृद्वक्ष्यमाणचांडालादि
स्त्रीषुगमनेषडब्दम् ॥ गर्भोत्पत्तौद्वादशवार्षिकम् ॥ ज्ञानतोभ्यासेवाग्निप्रवेशादिनामरणमेव ॥ क्षत्रियादीनां पादहानिः ॥ ज्ञानेतु सर्वेषां मरणमे
व ॥ अनुपनेतृभ्रातृजायायांमत्यासकृद्गमनेचांद्रम् ॥ मत्याक्रियासिद्धेःप्राङ्निवृत्तौचांद्रम् ॥ मत्याक्रियासिद्धिपर्यंतसकृद्गमनेअमत्याऽभ्यासेच
संवत्सरंविप्रकुलेभैक्ष्यम् ॥ मत्याभ्यासेतुगुरुतल्पसमम् ॥ एतदेवानुपनेतृपितृव्यमातुलजाययोः ॥ विधवासुपरस्त्रीषुगमनेकृच्छ्राधिकंतत्तत्पूर्वो
क्तंप्रायश्चित्तम् ॥ आसुरजस्वलासुगमनेप्रकीर्णकप्रकरणोक्तरजस्वलाप्रायश्चित्तैः सहतेषांसमुच्चयः ॥ तत्राप्याधिक्येनन्यूनस्यप्रसंगात्सिद्धिः ॥
साम्येतुतंत्रम् ॥ यत्तुरजस्वलागमनमनुपातकमितितत्ताद्दश्यांश्रोत्रियपत्न्यांकामतोभ्यासेबोध्यम् ॥ अथस्त्रीणांप्रायश्चित्तम् ॥ ॥ यत्पुंसःपा
रदायैषुतच्चैनांचारयेद्व्रतमिति ॥ स्त्रीणामर्धमितितुस्त्रीपुंससाधारणव्रतोपदेशविषयम् ॥ इदंचस्त्रीणांसमानेषुउत्तमेषुवावर्णेषुइच्छापूर्वकव्यभिचा

रएव ॥ अनिच्छंत्यास्तुमलिनायाअधःशयानायाः पिंडमात्रोपजीविन्यागृहेभर्त्रागुप्तमवरुद्धायाः कृच्छ्रंपराकोवाशक्त्यपेक्षयाअभ्यासेचांद्रम्
अकामतोब्राह्मण्यावैश्यक्षत्रियगमनेमासंतदर्धंचक्रमेणगोमूत्रयावकपानम् ॥ ज्ञानतस्ततत्कृच्छ्रंचांद्रद्वयम् ॥ सकृच्छ्रंचांद्रमेकंचांद्रंचक्रमेण ॥
अनिच्छन्त्याः स्वपतिभ्रांतिमत्यावाशूद्रगमनेरेतःसेकात्प्राङ्निवृत्तौसकृच्छ्रंचांद्रम् ॥ रेतःसेके सकृच्छ्रंचांद्रत्रयम् ॥ बुद्धिपूर्वकंगर्भपर्यंतंक्ष
त्रियवैश्यगमनाभ्यासेऽनिच्छयाक्षत्रियवैश्यगर्भप्रसवेचकृताचिह्नायानिर्वासनम् ॥ शूद्रविषयेतुकामतः संभवेगर्भानुत्पत्तावपिअनिच्छयोत्प
न्नगर्भस्त्रावेपिचतथानिर्वासनम् ॥ ताद्दक्क्षत्रियायावैश्यगमनेसकृच्छ्रंचांद्रायणम् ॥ शूद्रसंगमेसकृच्छ्रंचांद्रद्वयम् ॥ वैश्यायास्ताद्दश्याः
शूद्रसंगमेसकृच्छ्रंचांद्रम् ॥ शूद्रायाः शूद्रगमनेप्राजापत्यम् ॥ अज्ञानतः क्षत्रियायाः विप्रक्षत्रवैश्यगमनेषु क्रमेणार्धकायकायातिकृच्छ्राणि ॥
वैश्यायाविप्रक्षत्रियवैश्येषुगमनेकृच्छ्रपादकृच्छ्रार्धकायानि ॥ शूद्रायाविप्रक्षत्रियवैश्येषुअहोरात्रत्रिरात्रार्धकृच्छ्राणि ॥ विप्रायागर्भोत्पत्तौ
तत्प्रसवेचविप्रगर्भेपराकः ॥ क्षत्रगर्भेचांद्रम् ॥ वैश्यगर्भेसपराकंचांद्रम् ॥ इदमकामतः ॥ कामतश्चद्विगुणम् ॥ सर्वत्र प्रागुक्तेनसमुच्चय
इत्यूह्यम् ॥ यदाशूद्रगर्भप्रसूतेतदात्यागः पतितत्वात् ॥ केचिद्विप्रायाः शूद्रगर्भस्त्रावेपातेचचांद्रत्रयम् ॥ कामतोद्विगुणमित्याहुः ॥ एवं
क्षत्रियवैश्यस्त्रियोर्विप्रादिगर्भेपादपादन्यूनम् ॥ यदात्वाहितगर्भाएवव्यभिचरंतितदागर्भबाधशंकयादशमासोत्तरंप्रसवेसतिप्रायश्चित्तमाच
रेयुः ॥ गर्भस्यतुनदोषः ॥ तच्चमासंयावकपानम् ॥ यदात्वौद्धत्यात्स्त्रियः प्रायश्चित्तंनेच्छंतितदातासांनासाकर्णादिकर्तनम् ॥ यदा
विप्रस्त्रीप्रागुक्तरजकादीनकामतोगच्छंतितदाचांद्रत्रयम् ॥ चांडालव्यंतेवसायिगमनेतुचांद्रचतुष्टयम् ॥ मत्या द्विगुणम् ॥ रेतःसेकात्प्राङ्

निवृत्तौचांद्रमेवगर्भोत्पत्त्यनंतरम् ॥ अंत्यजगमनेतुप्रसवोत्तरमेवप्रायश्चित्तम् ॥ तदनुष्ठानंयावत्पृथगवतिष्ठेत् ॥ नतुगृहेप्रचरेत् ॥ तच्चसा
र्द्धंकृच्छ्राब्दंहिरण्यंवासोधेनुर्वादक्षिणा ॥ इदमकामतः ॥ मत्यान्त्यजसंगमेतुमरणाच्छुद्धिः ॥ रजकादितोगर्भोत्पत्तौचत्यागएव ॥ प्राय
श्चित्ताकरणेतुपुल्लिंगेनांकनीयामध्येइत्यन्ये ॥ अनिच्छंत्याबलादानुलोम्येनव्यभिचारेकृच्छ्रम् ॥ द्विभोगेपराकः ॥ त्रिरैन्दवम् ॥ रेतः
सेकात्प्राग्निवृत्तौउपवासत्रयम् ॥ एवंबंदिग्राहेगृहीत्वा बलाद्भुक्तायाः सांतपनम् ॥ तथांत्यजाद्युपभोगाभ्यासेत्यागएव ॥ मनसाभर्तुर
भिचारेत्रिरात्रम् ॥ क्षीरोदभोजनमधःशयनंचतुर्थेहनिअप्सुमग्नायाद्वात्रिंशदधिकचतुःशतावृत्तगायत्रीमंत्रेणाभिषेकः ॥ वाचाभिचारेप्मा
संक्षीरोदनमन्यत्प्राग्वत् ॥ रजोदर्शनेतुतेनैववाचिकमानसिकव्यभिचारशुद्धिः ॥ प्रायश्चित्तंतु रजोदर्शनात्प्राग्व्यवहार्यत्वसिद्ध्ये ॥
पतिघ्न्याः गुरुशिष्यादिगर्भायाः कृतचिह्नायाः गृहान्निर्वासनमेव ॥ इदमपि प्रसवेएव नतुस्रावादौ ॥ अन्यगर्भायास्तुयावत्प्रायश्चित्तंगृहेनिरो
धएव ॥ शूद्रस्य विप्रस्त्रीगमनेवीरणकुशवेष्टितस्याग्नौदहनंविप्रास्त्रियास्तुवपनंकारयित्वासर्पिषाभ्यज्यनग्नांखरमारोप्यराजमार्गेभ्रामयेत् ॥
ततः पूताभवेत् ॥ वैश्यस्यलोहितदर्भैर्वेष्टितस्याग्नौप्रक्षेपणम् ॥ विप्रायाः प्राग्वत् ॥ क्षत्रियस्यशरपत्रैर्वेष्टितस्यतत् ॥ विप्रायाः पूर्व
वत् ॥ एवंवैश्यस्यराजकन्यायांशूद्रस्यराजन्यवैश्यस्त्रीगमनेपि ॥ ज्ञानतइच्छापूर्वकसंगमेइदम् ॥ अकामतः स्वभार्याभ्रांत्याशूद्रस्यावि
प्रस्त्रीगमनेद्वादशवार्षिकम् ॥ वैश्यस्यनवाब्दम् ॥ क्षत्रियस्यषडब्दम् ॥ एवंशूद्रस्यक्षत्रियवैश्यस्त्रीगमनेपञ्चवार्षिकंवैश्यस्यक्षत्रियस्त्री
गमने षडब्दम् ॥ एतदपि गर्भानुत्पत्तौ गर्भोत्पत्तौवृद्धिगुणम् ॥ शूद्रास्याकामतोत्यंतव्यभिचारिविप्रस्त्रीगमनेमासंगोमूत्रयावकाहा

रकता ॥ वैश्यक्षत्रिययोःकृच्छ्रंसांतपनम् ॥ इतिपारदार्योपपातकप्रायश्चित्तानि ॥ ॥ अथपरिवित्तिवार्धुष्यलवणप्रायश्चित्तानि ॥ ॥
कनीयसिकृताविवाहेज्येष्ठस्याविवाहराहित्यंपारिवित्त्यंतद्वान्परिवित्तिस्तत्प्रायश्चित्तंपरिवेदनप्रकरणएवोक्तम् ॥ वार्धुष्यंनिपिद्धवृद्ध्युपजीव
नंतत्रचांद्रादिष्वेकंत्रैमासिकंवाजातिशक्तिगुणाद्यपेक्षयायोज्यम् ॥ लवणक्रियालवणोत्पादनंतत्राप्येवंयोज्यम् ॥ इतिपरिवित्तिवार्धुष्यलव
णक्रियाप्रायश्चित्तानि ॥ अथस्त्रीशूद्रवैश्यक्षत्रवधेप्रायश्चित्तानि ॥ ॥ तत्रनात्रेय्याअगर्भिण्यास्त्रियावधःस्त्रीवधः ॥ कामतोगुणवत्तरब्राह्म
णीवधेवप्रस्यषड्वार्षिकंब्रह्महत्याव्रतम् ॥ क्षत्रियवैश्यशूद्रजातिस्त्रीवधेतदर्धंतदर्धानि ॥ अमत्याचेत्सर्वत्रतत्तदर्धम् ॥ सापत्नमातृभगिनी
स्नुषाभार्यास्वतिप्रत्यासन्नगुणवत्तरवधेप्येतदेव ॥ निर्गुणतरसापत्नभागिनीपितृष्वसृमातृष्वसृमातुलानीपितृव्यजायाभ्रातृजायाश्वश्रूणांवधे
एतदेवपादोनम् ॥ निर्गुणतरायाःसपिंडसगोत्रास्त्रियावधेऽर्धम् ॥ असोमपाग्निहोत्रिश्रोत्रियपत्नीत्वादिगुणविशेषेद्विगुणम् ॥ गुणानामाधिक्ये
प्रायश्चित्ताधिक्यम् ॥ सकृत्सवर्णव्यभिचारिणीनांब्राह्मण्यादीनांवधे वृषभैकादशगोदानदक्षिणासहितसंवत्सरव्रतम् ॥ गोदानसहितषाण्मा
सिकव्रतंधेनुसहितसांतपनंधेनुद्वयदानंचेतिक्रमेण ॥ इदंकामतः ॥ अकामतश्चेत्तदर्धम् ॥ अथसकृत्सवर्णव्यभिचारितासुअप्रसूतास्वर्धम् ॥
प्रातिलोम्येनव्यभिचारितब्राह्मण्यादिवधेतुगोवधोक्तंयथार्हंयोज्यम् ॥ प्रातिलोम्येनात्यंतव्यभिचारितानांतत्प्रसूतानांब्राह्मण्यादीनांवधेक्रमेण
चर्मकार्मुकच्छागमेषदानानि ॥ चर्मात्रचर्ममयंजलभांडम् ॥ अज्ञानतइदम् ॥ ज्ञानतस्तुद्विगुणम् ॥ स्मृत्यर्थसारेतुज्ञानतोवधेषट्चतुर्द्व्येकमासाः
प्रसूतादीनांवधेचैवमित्युक्तम् ॥ अप्रसूतासुकिंचिदधिकम् ॥ अनुलोमेनात्यंतव्यभिचारितासुततोपिकिंचिदधिकम् ॥ गणिकाकर्मणाजीवंतीनां

विप्रादिकांतानांवधेकिंचिज्जलदानम् ॥ जलस्पर्शमात्रमित्यन्ये ॥ पत्यादिहननशूद्रगमनादिभिरतिदुष्टब्राह्मण्यादिवधेतुनकिंचित्प्रायश्चित्तम् । किंतुविपरीतंपुण्यमेवइत्याहुः ॥ जातिमात्रक्षात्रियवैश्यशूद्रवधेषुक्रमेणत्रैवार्षिकवार्षिकषाण्मासिकानिब्रह्महत्याव्रतानि ॥ त्रैमासिकसार्धं नवमासिकानीत्यन्ये ॥ अमत्येदम् ॥ मत्यातुद्विगुणम् ॥ क्षत्रियादिकर्तृकेएतद्वधेपादपादह्रानिः ॥ प्रांचस्तु अमत्याजातिमात्रक्षत्रवधेनवकृच्छ्रा णिताद्दग्वैश्यवधेचत्वारि शूद्रवधेद्वयं ॥ ज्ञानतःसर्वंद्विगुणमित्याहुः ॥ नृपतिवधेद्वादशवार्षिकम् ॥ प्रयोजकादीनांपादपादह्रानिः सर्वत्र ॥ अत्रसर्व त्रशवशिरःकपालध्वजतावश्यकी ॥ कामतःसकृत्प्रतिलोमसुतवधेचांद्रम् ॥ वैदेहवधेपादोनम् ॥ चांडालवधेद्विपादम् ॥ मागधवधेपादोनम् ॥ आ योगववधेद्विपादम् ॥ ज्ञानतोऽर्धम् ॥ चांडालवधेद्विचांद्रमित्यर्थः ॥ द्विगुणमंत्यजातिवधे ॥ ततःस्त्रीवधेषड्रात्रमुपवासः । तिलदानंचेत्याहुः । चोरा णामेतेषांवधेएकोपवासपूर्वकंघृतप्राशनम् ॥ अथान्यहिंसायांतत्रास्थिमतांकृकलासादीनामनुक्तप्रायश्चित्तानांसहस्रवधेअनास्थिमतांक्षुद्राणांज लूकमत्कुणयूकादंशादीनांशकटपूर्णवधेकृमिकीटपतंगपिपीलिकाभ्रमरदंशमक्षिकादीनांसहस्रवधाभ्यासेचषाण्मासिकंशूद्रहत्याव्रतम् ॥ दशधेनु दानंवा ॥ परिमाणाधिक्येप्रायश्चित्ताधिक्यम् ॥ इतोल्पपरिमाणवधेमलिनीकरणत्वात्त्र्यहंतप्तयावकपानम् ॥ अमत्याल्पैतद्वधेगुणादिजतुवधे चकिंचिद्देयम् ॥ अष्टमुष्टिमितधान्यंकिंचित् ॥ ततोप्यल्पेक्षुद्रतमेअनास्थिजंतोश्चप्राणायामाः ॥ फलपुष्पधान्यांतरसंजातप्राणिवधाभ्यासेदिन मेकंघृताहारः ॥ क्षत्रियादीनांपादपादह्रानिः ॥ स्त्रीणामर्धम् ॥ गौडास्तुकृकलासादिसहस्रवधेजलूकादिशकटवधेचतप्तकृच्छ्रम् ॥ अभ्यासेप्रागुक्तमि त्याह ॥ मार्जारगोधानकुलमूषकमंडूककुक्कुटचाषकाकोलूकश्वसर्पादीनांप्रत्येकंवधेपादकृच्छ्रम् ॥ त्रिरात्रंक्षीरपानंवा ॥ एकवर्षवत्सदानंवा ॥ स

मत्याद्विगुणम् ॥ अभ्यासेआवृत्तिः ॥ मत्याभ्यासेकायम् ॥ समुदितवधाभ्यासेपाण्मासिक
मुद्रनदीस्नानम् ॥ योजनगमनंवायथार्हंयोज्यम् ॥ मत्याद्विगुणम् ॥ अभ्यासेआवृत्तिः ॥ मत्याभ्यासेकायम् ॥ समुदितवधाभ्यासेपाण्मासिक
शूद्रवधव्रतम् ॥ दशधेनुदानंवा ॥ अत्रकपालधारणादिकंनास्ति ॥ कोकिलाकपोतशुककपिंजलटिट्टिभखंजरीटानांपुरुषभारवधेप्येतदेव ॥
गजवधेपंचनीलवृषभदानम् ॥ हयवधेतुवरवस्त्रयुग्मम् ॥ उष्ट्रेगुंजाभारःस्वर्णंवागुञ्जामितम् ॥ खरेवृषएकवर्षंवत्सोवा ॥ अजामेषयोरप्येवम् ॥
अत्राभ्यासेत्रिरात्रमुपवासोऽपि ॥ अत्यंताभ्यासेसप्तरात्रोपवासश्च ॥ हंससारसपारावतमयूरचक्रवाकबकबलाकाविषजकंकश्वावित्कारंड
वश्येनभासराजपक्षादिषुगौर्देया ॥ गृध्रकाकोलूककपोतकुक्कुटबृहत्पक्षादिषुत्रिवर्षोवत्सः ॥ शुकचाषखंजरीटलावकसारिकादिषुद्विवर्षवत्सः ॥
टिट्टिभतित्तिरकारंडवचटकादिषुक्षुद्रपक्षिषुएकवर्षोवत्सः ॥ क्रव्यादव्याघ्रसृगालादिवधे वानरहंसश्येनकंकगृध्रादिषुजलचरबलाकादिपक्षि
षुस्थलचरकाकादिषुभासेमयूरेचप्रत्येकंवधेधेनुर्देया ॥ अक्रव्यादहरिणादिमृगेषुखंजरीटादिपक्षिषुचवत्सतरीदेया ॥ सर्पादिसरीसृपेषुलो
हदंडस्तीक्ष्णोभयाग्रः ॥ यद्वा शुकेषुद्विवर्षोवत्सः ॥ क्रौंचेत्रिवर्षः ॥ महिषादिवधेवत्सतरी ॥ वराहेघृतकुंभः ॥ तित्तिरौ तिलद्रोणः ॥ नपुं
सकमृगपक्ष्यादिवधेमाषमितंसीसंपलालभारोवा ॥ अत्र दानाशक्तौतु स्मृत्यर्थसारेगजाश्वोष्ट्रखरगौरगवयऋक्षमहिषमेषादिष्वमत्याप्रत्येकंव
धेसार्धकृच्छ्रः ॥ समस्तवधेचांद्रम् ॥ मत्याप्रत्येकंवधेपिचांद्रम् ॥ मत्यासमस्तवधेत्वावृत्तिश्चांद्रस्य ॥ हरिणसारंगरुरुवराहसिंहगंडक
व्याघ्रमहामत्स्यग्राहशिशुमारादिष्वमत्याप्रत्येकंकृच्छ्रः॥ समस्तवधेकृच्छ्रद्वयम्॥मत्याप्रत्येकंवधेचैवम्॥ समस्तवधेचांद्रम् ॥ श्ववृकवानरजंबू
कविड्वराहादिषुअमत्याप्रत्येकंत्रिरात्रंसमस्तवधेकृच्छ्रः ॥ मत्याप्रत्येकंवधेचैवम्॥समस्तवधेद्विगुणम् ॥ मार्जारसर्पाजगरडुंडुभनकुलमंडूकमूष

ककर्कटशलभसेधागोधाशल्यककूर्मशशादिष्वमत्याप्रत्येकंवधेपादकृच्छ्रः ॥ समस्तवधेत्वर्धकृच्छ्रः ॥ मत्याप्रत्येकंवधेचैवम् ॥ समस्तवधे
कृच्छ्रः ॥ हंसादिष्वमत्याप्रत्येकंवधेकृच्छ्रः ॥ गृध्रादिषुपादन्यूनः ॥ शुकादिष्वर्धकृच्छ्रः ॥ मत्याद्विगुणम् ॥ टिट्टिभादिषुपादः ॥ समस्तव
धादौद्विगुणम् ॥ हरिणादिषुहंसादिषुचहंतृबहुत्वेप्रत्येकंत्रिरात्रम् ॥ श्वादिषुगृध्रादिषुचैवम् ॥ गजादिषुप्रतिपुरुषंकृच्छ्रः ॥ मार्जारादिशुकादि
षुचप्रत्येकमुपवासः ॥ टिट्टिभादिषुहंसादिषुप्रतिपुरुषंनक्तम् ॥ मृतप्रायेतुगजादिषुअमत्याप्रत्येकंवधेत्रिरात्रम् ॥ हरिणादिषुद्विरात्रम् ॥ खरा
दिषुचतुर्थकालाहारः ॥ मार्जारादिषूपवासः ॥ गृध्रादिषुनक्तम् ॥ शुकादिष्वेकभक्तम् ॥ टिट्टिभादिषुजलेप्राणायामः ॥ अविज्ञातसर्वमृगप
क्षिषुत्रिरात्रमिति ॥ इदंसर्वंदेशकालजातिशक्तिगुणाद्यपेक्षयागुरुलघुविषयेयोज्यम् ॥ इतिस्त्रीशूद्रादिवधेन्यहिंसायांचप्रायश्चित्तानि ॥ ॥ अथ
द्रुमादिच्छेदनेप्रायश्चित्तम् ॥ वृक्षगुल्मलतागुच्छक्षुपप्रतानौषधिवीरुधांफलपुष्पादिभिरुपयोगिनीनांयज्ञाद्यदृष्टार्थंविनाच्छेदेशतगायत्री
जपः ॥ तत्रवृक्षाःपिप्पलाशोकाम्रपनसाद्याः ॥ गुल्मामालत्यादयः ॥ लताद्राक्षादयःकुरंटकादयः ॥ क्षुपाःकरवीरादयः ॥ प्रतानाःसा
रिवादयः ॥ औषध्यःशाल्यादयः ॥ वीरुधोगुडूच्याद्याः ॥ इदमकामतोऽसकृच्छेदेकामतःसकृच्छेदेच ॥ ग्राम्यारण्यौषधिच्छेदनात्यंता
भ्यासेतुदिवागोपरिचर्यांकृत्वारात्रौक्षीरंपीत्वास्वपेत् ॥ कामतोऽभ्यासेऽकामतोत्यंताभ्यासेचवृक्षलतादिविषयेप्यर्धकृच्छ्रः ॥ फलवतां
छेदेप्राजापत्यम् ॥ कृष्याद्युपकरणादिदृष्टार्थंयज्ञाद्यदृष्टार्थंचच्छेदेतुनदोषः ॥ महाफलप्रदानांनारिकेलादिवृक्षाणांकामतश्छेदनात्यं
ताभ्यासेसंवत्सरव्रतम् ॥ सकृच्छेदेतूक्ताद्विगुणजपः ॥ एवंचैत्यश्मशानसीमापुण्यस्थानेदेवालयस्थेवृक्षेऽन्यास्मिन्नपिचतुष्पथस्थेमहाच्छाया

वृक्षेप्रख्यातेवावृक्षेच्छिन्नेद्विगुणजपः ॥ प्राजापत्यंचबोध्यम् ॥ शूद्रस्यतुदंडानुसारेणजपस्थानेद्विरात्रोपवासादिकल्प्यम् ॥ इत्थं
छिन्नवृक्षादेरग्रहणविषयम् ॥ छित्त्वापरिग्रहणेतुदंडाधिक्यदर्शनात्प्रायाश्चित्तातिरेकोबोध्यः ॥ कामतोत्यंताभ्यासेवृक्षादौसर्वत्रचांद्रा
दिष्वेकम् ॥ ॥ इतिद्रुमच्छेदप्रायश्चित्तानि ॥ ॥ प्रसंगाच्छ्वादिदंशप्रायश्चित्तम् ॥ श्ववृकसृगालखरोष्ट्रविड्वराहकाककुक्कुटवा
नरपुंश्चलीक्रव्यादनराश्चैनाभेरधइंषद्दष्टोविप्रोजलेप्राणायाममममंत्रंकृत्वाघृतंप्राश्यशुद्ध्यति ॥ अत्रघृतप्राशनंभोजनस्थाने ॥ तेनाहारांतर
निवृत्तिः ॥ अत्रसरुधिरदंशेषोडशप्राणायामाः ॥ आपोहिष्ठेत्यादिभिः स्नानंचाधिकम् ॥ अतिगाढदंशेसमुद्रगायांनद्यांप्राणायामशतन
मन्यत्पूर्ववत् ॥ अत्रशक्तौसत्यांब्रह्मचारिणस्त्रिरात्रंसायंदुग्धपानमेव ॥ गृहस्थस्य द्विरात्रम् ॥ अग्निहोत्रिणएकाहम् ॥ नाभेरूर्ध्वदंशे
इदमेवद्विगुणम् ॥ मुखेदष्टस्यत्रिगुणम् ॥ मस्तकेदंशेचतुर्गुणम् ॥ मार्जारमूषकनकुलाजमाहिषीहीनजात्यारण्यमृगैश्चदष्टेदशप्राणा
यामाः ॥ नाभेरधइंषद्दष्टस्यपंच ॥ क्षत्रियादौपादपादन्यूनम् ॥ शूद्रस्यामंत्रकप्राणायामाः ॥ उपवासादेवशूद्रस्यशुद्धिरित्यन्ये ॥
स्त्रीणांतुश्वादिदंशेस्नात्वोदितस्यनक्षत्रचंद्रादेर्दर्शनाच्छुद्धिः ॥ कृच्छ्रादिव्रतस्थायादंशेतुत्रिरुपवासपूर्वकंचतुर्थेयावकभोजनम् ॥ ततो
व्रतशेषसमाप्तिः ॥ व्रतस्थस्यपुंसोप्येतदेव ॥ जपाद्याधिकंप्राणायामादिकंच ॥ रजस्वलायाःश्वादिदंशेतुएकोपवासमुपवासपंचकंवाकृत्वापष्ठे
पंचगव्यपानम् ॥ नाभेरूर्ध्वंतुप्रागुक्तक्रमेणद्वित्रिचतुर्गुणंबोध्यम् ॥ अत्यसमर्थस्यदिवादंशेआनक्षत्रादभोजनम् ॥ रात्रिदंशेआसूर्यो
दभोजनं गायत्रीशतजपोवा ॥ यदातुश्वादिदंशजेवाशस्त्राघातादिजेवाव्रणेकृमयउत्पद्यंतेतदागोमूत्रगोमयाभ्यांत्रिसंध्यंस्नानंत्रिरात्रंपंच

गव्यपानंच ॥ नाभेरूर्ध्वं कंठादधःषड्रात्रम् ॥ शिरोव्रणेकृमिषुकायम् ॥ युगपदनेकव्रणेषुकृमिसंभवेसांतपनंवृषभश्चदक्षिणा ॥ इदं
चश्वादिदंशनिमित्तप्रायश्चित्तसहितमेव ॥ शस्त्रादिव्रणेकृमिदर्शनेतुकेवलमेवैतत् ॥ क्षत्रियादीनांपादहानिः ॥ अन्यव्रणेषुकृमिदोषेतु
उपवासाहिरण्यदानकृच्छ्रैःशुद्धिः ॥ ॥ इतिश्वादिदंशकृमिव्रणादिप्रायश्चित्तानि ॥ ॥ शास्त्रोक्तोपायार्जितादर्थांतरेणोपजीवनंनिंद्यार्थ
जीवनम् ॥ तत्रचांद्रादिष्वेकंत्रैमासिकंवाजातिशक्त्याद्यपेक्षया ॥ नास्तिक्यं वेदनिंदनं तेनजीवनंचपरलोकोनास्तीत्यभिनिवेशश्च
तस्मिन्सकृत्कृतेकृच्छ्रः ॥ तेनजीवनेऽतिकृच्छ्रः ॥ अज्ञानतोर्धम् ॥ ज्ञानतोऽभ्यासे चांद्रादिष्वेकम् ॥ अत्यंताभिनिवेशेनबहु
कालाभ्यासेग्रीष्मवर्षाहेमंतर्तुषुक्रमेणातपाभ्रावकाशजलशयनानि ॥ पंचवर्षं प्रतिगृहेषु भैक्ष्यंवा ॥ ॥ अथव्रतलोपेब्रह्मचारिणः
प्रायश्चित्तम् ॥ ॥ सचब्रह्मचारिणःपुंस्त्रीमैथुनरूपोलोपः ॥ सर्वसाधारणस्तुदेवताराधनाद्यर्थं गृहीतव्रतलोपःप्रायश्चित्तार्थप्रक्रांतव्रत
कृच्छ्रादिव्रतच्युतिश्च ॥ किंचिद्व्रतंसंकल्प्यत्यागश्च ॥ संकल्पितस्नातकव्रतादेर्मिथ्याकरणंच ॥ शिष्टाप्रतिषिद्धस्यभोजनव्यतिरेकेणमया
जलंनपातव्यमित्यादिनियमत्यागश्च ॥ तत्रकालदेशशक्तिबहुत्वाल्पत्वादिकंपर्यालोच्योपपातकसामान्यप्रायश्चित्तानियोज्यानि ॥ अव
कीर्णतारूपेब्रह्मचर्यादिव्रतलोपेतूच्यते ॥ तत्रगुरुतल्पतत्समानेतरांस्त्रियंगत्वानैर्ऋतदैवतेनैकाक्षेणगर्दभेणपशुनारण्येचतुष्पथेरात्रौलौकि
काग्नौपाकयज्ञधर्मेणाश्वलायनादिगृह्योक्तपशुकल्पतंत्रेणेष्ट्वातस्याजिनमूर्ध्ववालंपरिधायत्रिपवणस्त्रायीलोहितपात्रः स्वकर्माचक्षाणः सप्तगृहेभै
क्ष्यंकुर्वन्नेकवारभोजीवर्षेणशुद्ध्येत् ॥ एवमशक्तोनैर्ऋतंचरुंनिरूप्यपक्त्वाकामायस्वाहा ॥ कामकामायस्वाहा ॥ नैर्ऋत्यैस्वाहा ॥ रक्षो

भ्यःस्वाहा ॥ देवताभ्यःस्वाहेतिहुत्वाहोमशेषंसमाप्योक्तशब्दव्रतंचरित्वाशुद्ध्येत् ॥ इदमश्रोत्रियविप्रपत्न्यांश्रोत्रियवैश्यपत्न्यांचज्ञे
यम् ॥ यदातुगुणवत्योःश्रोत्रियपत्न्योर्विप्रक्षत्रियस्त्रियोरवकीर्णीतदात्रिवार्षिकाद्विवार्षिकचव्रतंहोमश्च ॥ अमत्यावकीर्णत्वेईपद्व्यभिचारिण्यांच
तत्त्वेवार्षिकव्रतविषयेषाण्मासंब्रह्महव्रतचीरवासाश्चरेत् ॥ द्विवार्षिकादिविषयेत्वमत्यार्धम् ॥ अत्यंतव्यभिचरितशूद्रायांसचैलस्ना
तस्योदकुंभदानम् ॥ तादृग्वैश्यायांचतुर्थकालाहारीविप्रान्भोजयेत् ॥ तृणभारंचगोभ्योदद्यात् ॥ तादृक्क्षत्रियायांत्रिरात्रोपोषितेनघृत
पात्रंदेयम् ॥ तादृग्विप्रायांषडुपवासागोदानंचकार्यम् ॥ गोष्ववकीर्णस्यपलालभारसीसमाषयोर्दानम् ॥ स्त्रीसंभोगमंतरेणमत्यारेतोविसर्गे
ब्रह्मचारिणोनैर्ऋतयागमात्रम् ॥ दिनस्वप्नेरेतोविसर्गेचैवम् ॥ कृच्छ्रचांद्रायणादिव्रतेषुअतिदिष्टब्रह्मचर्येषुरेतस्कंदनेप्येवम् ॥ रात्रिस्वप्नेरेत
स्कंदनेब्रह्मचारीस्नात्वाअर्कमर्चयित्वापुनर्मामित्यृचोजपेत् ॥ गायत्रींवात्रिर्जपेत् ॥ अष्टशतगायत्रीजपइत्यन्ये ॥ वानप्रस्थयत्योरमत्याब्रह्म
चर्यलोपेपराकत्रययुक्तमवकीर्णिव्रतम् ॥ मत्याकृच्छ्रत्रयम् ॥ अथप्रसंगादुच्यतेब्रह्मचारिणःप्रायश्चित्तम् ॥ ब्रह्मचारिणोनातुरस्यगु
रुशुश्रूषादिगुरुतरकार्यंव्यग्रतयासप्तरात्रंभैक्ष्यस्याग्निकार्यस्यवालोपे ॥ कामावकीर्णोस्म्यवकीर्णोस्मिकामायस्वाहा ॥ कामावपन्नोस्म्यवप
न्नोस्मिकामकामायस्वाहा ॥ इत्याभ्यामाज्याहुतीर्हुत्वा ॥ समासिंचंतुमरुतः समिंद्रः सबृहस्पतिः समायमग्निः सिंचत्वायुषाचबलेनचेत्यग्नेते
नोपतिष्ठेत् ॥ अव्यग्रतयातल्लोपेत्ववकीर्णिव्रतम् ॥ अन्येसप्तरात्रमवकीर्णिव्रतमित्याहुः ॥ मणिवासोगवादीनांप्रतिग्रहेअष्टसहस्रगायत्री
जपः ॥ उपनयनोत्तरंदिनचतुष्टयव्रतमध्येमेखलायज्ञोपवीतदंडादीनांनाशेवस्त्रंसूत्रांतरंवाधृत्वामनोज्योतिरित्यादिमनोलिंगाभिस्त्वमग्नेव्रत

प्राअसीत्यादिव्रतलिंगाभिश्चतस्रआज्याहुतीर्हुत्वापयनोक्तविधिनाधारयेत् ॥ असद्वैश्यभोजने सुप्तोदितेसुप्तास्तमितेचवांतोदिवास्वापेन ग्नस्त्रीदर्शनेनग्नस्वापेश्मशानक्रमणहयाद्यारोणपूज्यातिक्रमेषुचैतैर्जुहुयात् ॥ यज्ञोपवीतंविनातदन्यथावाकृत्वाभोजनेविण्मूत्रोत्सर्गेवागाय त्र्यष्टसहस्रजपः ॥ पानेत्रिःप्राणायामाः ॥ फलादिभक्षणेषट् ॥ भोजनमेहनयोरप्येवमित्येके ॥ सूर्योदयस्वापिनोदिवोपवासोदशाधिकसहस्रगाय त्रीजपः ॥ अस्तमयस्वापिनस्तु रात्र्युपवासोत्तरदिनेप्रागुक्तजपइत्यन्ये ॥ स्थावरजंगमवृक्षवल्मीकपशुसरीसृपादिप्राणिवधेकूष्मांडी भिर्होमः ॥ यज्ञोपवीतमेखलाजिनदंडानांलोपेव्याहृतिहोमंषट्प्राणायामांश्चकृत्वापुनर्धारयेत् ॥ संध्याग्निकार्यलोपेस्नात्वाऽष्टसहस्रगाय त्रीजपः ॥ भिक्षाटनमकृत्वास्वस्थस्यैकान्नाशनेऽष्टशतजपः ॥ भिक्षायांतुकचिदेकान्नाशनेदोषोन ॥ शौचाचमनसंध्याभिक्षाग्निकार्येकौ पीनमेखलाजिनलोपेशूद्रादिस्पर्शे छत्रपादुकाभ्यंगोद्वर्तनानुलेपांजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादि- करणे सकलदोषपरिहारार्थंकृच्छ्रत्रयंमहाव्याहृतिहोमश्च ॥ बहुकालंबहुतरधर्मलोपेतंवाधियोतिमंत्रस्याशिवालयेलक्षजपः ॥ गुरुशुश्रूषाद्यल्पलो- पेऽष्टशतजपः ॥ मधुमद्यमांसलशुनभक्षणेकृच्छ्रम् ॥ मत्यापराकः ॥ अभ्यासेद्विगुणं पुनरुपयनंच ॥ ततआरब्धव्रतस्य समापनम् ॥ मद्यग्रहणंक्षत्रियादिविषयम् ॥ तदेकनाश्यरोगाद्यर्थंमध्वादिकंगुरूच्छिष्टंकृत्वाभोक्तव्यम् ॥ ततोरोगनिवृत्तौहंसःशुचिष दित्यादित्यमुपतिष्ठेत् ॥ मध्वादेरकामतोभक्षणेदोषोन ॥ गुर्वाज्ञाविघातेगुरोःप्रतिकूलाचरणेचस्नात्वाप्रणिपातादिनागुरुंप्रसाद्यागतको पदुःखंकृत्वाशुद्ध्येत् ॥ एतदज्ञानपूर्वकंसकृदपराधे ॥ अन्यत्रात्यंताभ्यासेपितृविषयेब्रह्महत्यावत् ॥ ब्रह्मचारिणोयतिव्रतिनोश्चमासि

कादिप्रेतश्राद्धभोजनेत्रिरात्रमुपवासश्चतुर्थेनक्तंप्राणायामत्रयंचपंचमादिनेघृतप्राशनंच ॥ अनापदितुकायम् ॥ एकोपवासःपंचगव्यंच ॥
अभ्यासेतप्तकृच्छ्रादि ॥ शूद्रान्नभोजनेपराकः ॥ क्षत्रियोच्छिष्टभोजनेस्नात्वाऽष्टशतजपोद्वादशदिनमुपवासश्च ॥ उच्छिष्टमत्रतद्भोजनोत्तरं
पाकपात्रेऽवशिष्टम् ॥ वैश्यशूद्रोच्छिष्टेऽधिकंकल्प्यम् ॥ चोरव्याघ्रादिभयाकुलदेशेमहांधकारेरात्रौगुरुणास्वकार्यार्थंप्रेषितःशिष्योदैवा
न्मृतश्चेद्गुरोःसकृच्छ्रत्रयम् ॥ सर्वत्रारोग्यार्थमौषधपथ्यान्नदानेनतदर्थंक्रियमाणयत्नेवांगोब्राह्मणादिप्राणिमृतौनकश्चिद्दोषइतिप्रासंगिकःसर्व
हिंसापवादः ॥ ॥ इतिव्रतच्युतिप्रायश्चित्तानि ॥ ॥ अथाभिशंसिप्रायश्चित्तम् ॥ ॥ यस्तुविप्रोविप्रंमहापातकादिनामिथ्याअभिशं
सेत् ॥ अनेनब्रह्महत्यादिकंगोहत्यादिकृतमितिसंव्यवहर्तृजनान्प्रतिमिथ्याब्रूयात्समासमंबुभक्षोनियतेंद्रियःशुद्धवतीमंत्रजपशीलःशु
द्ध्येत् ॥ इदमुपपातकाभिशंसनाभ्यासेमहापातकस्यसकृदभिशंसनेचक्षत्रियाद्यभिशंसनेविप्रस्यार्धार्धहानिः ॥ यदाक्षत्रियादयोविप्रम
भिशंसंतितदातेषांद्वित्रिचतुर्गुणम् ॥ शूद्रस्यजपस्थानेऽमंत्रकप्राणायामाः ॥ सत्याभिशंसनेसर्वत्रतदर्धम् ॥ अतिपातकामिथ्याभिशंसि
नामुक्तमासव्रतंपादोनम् ॥ अनुपातकाभिशंसिनांततोन्यूनम् ॥ उपपातकेसकृदभिशंसनेततोन्यूनम् ॥ उपपातकाभिशंसनाभ्यासेमासव्र
तमुक्तम् ॥ प्रकीर्णकेषुसकृदभिशंसनेततोपिन्यूनम् ॥ अतिपातकादिष्वभ्यासेकिंचिदधिकमूह्यम् ॥ अथमिथ्याभिशस्तस्यमहापातकेषुकृ
च्छ्रम् ॥ अतिपातकादिषुपादपादह्रासः ॥ मिथ्याभिशस्तस्यवर्षपर्यंतंप्रायश्चित्ताकरणेमासमंबुभक्षिता ॥ तत्रसार्द्धकृच्छ्रद्वयम् ॥ महापापा
भिशस्तस्यवर्षोत्तरंद्विमासंतत्रपंचकृच्छ्राः ॥ गुरुविषयेकामतोमिथ्याभिशंसनावृत्तौपंचवर्षंविप्रकुलेभैक्ष्याचरणंसंवत्सरंवाषण्मासंवागवानुग

मनम् ॥ अत्राभ्यासाभिनिवेशादितारतम्येनव्यवस्था ॥ ॥ इतिअभिशंसिमिथ्याभिशस्तयोःप्रायश्चित्तानि ॥ अथसुताविक्रयेप्राय
श्चित्तम् ॥ ॥ सचधनंगृहीत्वादास्यार्थंकन्यापुत्रादेर्दानम् ॥ एवंभार्याविक्रयेप्यूह्यम् ॥ तत्रकन्याविक्रयेदेवगृहेप्रतिश्रयोद्यानारामपुष्करिणी
सभाप्रपापुण्यसेतुविक्रये ॥ सुकृतविषयेचचांद्रादिष्वेकम् ॥ अथवात्रैमासिकम् ॥ आपदितप्तकृच्छ्रः ॥ अत्यंतापदिसांतपनम् ॥
पुत्रविक्रयेचसर्वंद्विगुणम् ॥ एकपुत्रस्त्वनापदिकामतःसुताविक्रयीचत्रिषवणस्नायीअधःशायीचतुर्थकालाशीवत्सरेणशुद्ध्यति ॥ इदंशक
न्याविक्रयेतदर्धेनशुद्धिः ॥ कामतोऽनापदिअनेकपुत्रस्यसुताविक्रयेचांद्रम् ॥ आपद्येकपुत्रस्यकामतःसुताविक्रयेचांद्रद्वयम् ॥ इतिपुत्र
कन्याविक्रयप्रायश्चित्तानि ॥ सुतविक्रयोत्तरंधान्यपुष्पपशुस्तेयइतिउपपातकगणेपठितंतत्प्रायश्चित्तंस्तेयप्रकरणएवोक्तम् ॥ ॥
अथायाज्ययाजनेप्रायश्चित्तम् ॥ ॥ तत्रव्रात्ययाजकाव्रात्योपनेताव्रात्याध्यापकोहीनयाजकःशूद्रांतेष्टिकर्मयाजकोवेदविप्लावीतस्करे
तरशरणागतत्यागीतस्कररक्षकः वशीकरणोच्चाटनादिरूपाभिचारकर्ताचामत्याकृच्छ्रसांतपनातिकृच्छ्रेषु त्रिषुयथायोग्यंकाचित्समुदितंकाचि
देकंकुर्यात् ॥ आततायिविषयाभिचारेनदोषः ॥ व्रात्यलक्षणंप्रागुक्तम् ॥ द्विरात्रादिद्वादशाहांतोहर्गणोयज्ञोहीनः ॥ मत्याव्रात्यस्यो
पनयनाध्यापनयाजनेषूद्दालकव्रतम् ॥ मत्यासर्वेष्ववंवा ॥ उद्दालकव्रतंचव्रात्यप्रकरणेउक्तम् ॥ विप्राद्यंतेष्टिकर्मसुलोभाद्याजनेक्रमेण
कायोतिकृच्छ्रस्तप्तकच्छ्रश्च ॥ अभ्यासेद्विगुणम् ॥ अत्यंताभ्यासेत्रिगुणम् ॥ शूद्राद्ययाज्ययाजनेतत्पौरोहित्यतदध्यापनेचामत्याचांद्रा
दिष्वेकमशक्तौकृच्छ्रम् ॥ मत्यात्रैमासिकम् ॥ अभ्यासेद्विगुणादि ॥ कामतोत्यंतशूद्रयाजनाभ्यासेग्रीष्मवर्षाहेमंतेषुक्रमेणपंचतपो

श्रवकाशजलशयनानिकुर्यात् ॥ गोमूत्रयावकाशनंच ॥ अकामतोभ्यासेतल्लब्धसर्वद्रव्यत्यागेनदशसहस्रप्राणायामाभ्यासेनशुद्ध्यति ॥
परिवेदकादियाजनेप्येवम् ॥ सर्वत्रलब्धद्रव्यत्यागपूर्वकमेवैतत्प्रायश्चित्तानुष्ठानम् ॥ एवंपर्वचांडालश्रोत्रावकाशाद्यनध्यायेषुअध्ययन
मशुचिनाध्ययनंवानिषिद्धाध्ययनंनिषिद्धध्यापनंचवेदविप्लावनं तत्राद्येमत्यात्रिरात्रमुपवासः ॥ अभ्यासेकृच्छ्रम् ॥ अत्यंताभ्यासेकृच्छ्रत्र
यम् ॥ कामतोत्यंतानवच्छिन्नाभ्यासेसंवत्सरंयवौदनभोजनम् ॥ एतदेवगर्हिताध्यापकयाजकयोर्दक्षिणात्यागमात्रमाधिकम् ॥ स्मृतिधर्म
शास्त्रव्याख्यानेऽधीतेचतदर्धम् ॥ नित्यानध्यायेष्वध्ययनेयावदधीतंतावज्जलेऽघमर्षणवत्स्वाध्यायंजपेत् ॥ अशक्तोजलेस्थित्वाजपमात्र
म् ॥ अत्यशक्तःस्थलेजपेत् ॥ मत्याप्रत्यनध्यायमुपवासः ॥ अशुचिनाध्ययनेचैवम् ॥ नैमित्तिकानध्यायेष्वध्ययनेचाप्येवम् ॥
दुर्बोधस्यतदर्धम् ॥ काककुक्कुटमूषकमंडूकादेरंतरागमनेनक्तम् ॥ तावदध्ययनविरामश्च ॥ गवाश्वमाहिषादिपशुस्त्रीशूद्राद्यंतरागमनेतूपवा
सः ॥ मार्जारसर्पनकुलपंचमजात्यादेरंतरागमनेत्रिरात्रमुपवासास्त्रिषवणस्नानंच ॥ जानुभ्यांग्रामांतरगमनंवा ॥ श्ववृकसृगालवानररजका
दीनामंतरागमनेकायम् ॥ खरवराहोष्ट्रादिचांडालसूतिकोदक्याशवादेरंतरागमनेकायत्रयम् ॥ गौरगवयाजादित्रह्मोक्तनास्तिकादेरन्तरागम
नेत्रैमासिकम् ॥ शशमेषश्वपाकादिगमनेषाण्मासिकम् ॥ गजगंडसारव्याघ्रमहापातकिकृतघ्नादिगमनेकृच्छ्राब्दम् ॥ तावत्प्रायश्चित्तका
लमनध्ययनंच ॥ अमत्यासर्वत्रार्धम् ॥ केचिदंतरागमनेसर्वत्रतदानीमेवानध्ययनविरामेप्रायश्चित्तंनेत्याहुः ॥ ॥ इत्ययाज्ययाज
नादिप्रायश्चित्तानि ॥ ॥ अथपितृमातृसुतत्यागेप्रायश्चित्तम् ॥ ॥ अपतितानांपितृमातृगुरूणांगृहान्निष्कासनंहिंसः ॥

तत्रमत्यातत्कर्तुश्चांद्रादिष्वेकंत्रैमासिकंवा ॥ जातिशक्तिगुणाभ्यासादिकापेक्षयायोज्यम् ॥ मत्याभ्यासेमासंपष्ठान्नकालता मा
संसंहिताजपोवाऽधिकः ॥ भार्यासुतत्यागेप्येवम् ॥ मातुस्तुसर्वदोषेप्यत्याज्यतैव सर्वथारक्षणीयत्वात् ॥ ॥ इतिपित्रा
दित्यागप्रायश्चित्तानि ॥ ॥ अनंतरंतडागारामविक्रयेइत्युपपातकपठितंतत्प्रायश्चित्तंतुसुतविक्रयप्रसंगेउक्तंवेदितव्यम् ॥ ॥ अथक
न्यादूषणेप्रायश्चित्तम् ॥ ॥ तच्चांगुल्यादिनातस्याःक्षतयोनित्वकरणंमिथ्यातद्दोषख्यापनंच ॥ तत्रसवर्णानांकन्यादूषणेचांद्रंत्रैमासि
कंवा ॥ आनुलोम्येनासवर्णकन्यादूषणेमासंपयःपानंकार्यंवा ॥ प्रातिलोम्येतुक्षत्रियवैश्ययोःकृच्छ्राब्दंग्रीष्मवर्षाहेमंतेषुक्रमेणातपाभ्रावका
शजलाशयपूर्वकंमासंयावकपानंवा शूद्रस्यतुविप्रादिकन्यादूषणेवधएव ॥ अत्यंताभ्यासेसवर्णस्यापिकृच्छ्राब्दम् ॥ सोमविक्रयीव्र
पलीपतिः कौमारदारत्यागीशूद्रयाजको गुरोःप्रतिहंता सुराभिन्नमद्यपोब्राह्मणवृत्तिघ्नःकूटव्यवहारीमित्रध्रुक्छरणागतघातीप्रातिरूपवृत्ति
श्चैतेऽमत्याप्रवृत्तास्त्रैमासिकंव्रतंकुर्युः ॥ मत्याषाण्मासिकम् ॥ अभ्यासेकृच्छ्राब्दम् ॥ ॥ इतिकन्यादूषणादिप्रायश्चित्तानि ॥ ॥
अथक्रमप्राप्तपरिवेदकयाजनादौप्रायश्चित्तम् ॥ ॥ परिवेदकयाजने १ तस्मैकन्यादाने २ गुरौकौटिल्ये ३ आत्मार्थपाकारंभचमद्यपायाः
स्वस्त्रियाअपिउपभोगरूपेमद्यपस्त्रीनिषेवणेदेवताऽऽराधनाद्यर्थंगृहीतव्रतलोपेन्यस्मिन्व्रतलोपेचैतेषूपपातकेषुचांद्रादिष्वेकंत्रैमासिकंवा ॥ इति
परिवेदकयाजनादिप्रायश्चित्तानि ॥ अथस्वाध्यायाग्निसुतत्यागेप्रायश्चित्तम् ॥ ॥ तत्रात्यंतापदिस्वल्पकालमधीतवेदत्यागेकार्यम् ॥
अधिककालेऽतिकृच्छ्रम् ॥ ततोप्यधिकेपराकः ॥ मासोत्तरंवेदत्यागेचांद्रम् ॥ यदातुधनार्जनाद्यासक्त्याअसच्छास्त्राभ्यासकुटुंबलाल्ना

तथानास्तिक्य
द्याकुलतयाचिरकालंवेदंत्यजतितदाचांद्रादिष्वेकंत्रैमासिकंवा ॥ नास्तिक्याद्व्यसनासक्त्यावावेदत्यागोब्रह्महत्यासमः ॥ तथानास्तिक्य
दग्नित्यागेमासद्वयेजातेकार्यंकृत्वापुनः संधानम् ॥ मासचतुष्टयेतिकृच्छ्रः ॥ षण्मासत्यागेपराकः ॥ तदूर्ध्वंचांद्रादिष्वेकम् । संवत्सरादूर्ध्वंत्रै
मासिकंद्वैमासिकंवायदात्वालस्यादिनात्यजतितदाद्वादशाहातिक्रमेत्रयउपवासाः ॥ मासातिक्रमेद्वादश ॥ संवत्सरातिक्रमेमासोपवासो
मासंपयोभक्षणंवाप्रमादादिनातत्त्यागेतुआत्रिरात्राद्द्वादशप्राणायामाः ॥ आषड्रात्राच्चतुर्विंशतिः ॥ आद्वादशरात्रात्पंचाशत् ॥ आविंशति
रात्राच्छतप्राणायामाः ॥ आत्रिंशद्रात्रादुपवासः ॥ आषष्टिरात्रात्त्रिरात्रम् ॥ आसंवत्सरात्कायम् ॥ अतःपरंप्रत्यब्दंकायम् ॥ सर्वत्रयावत्का
लमहोमीतावद्द्रव्यंतंडुलादिदद्यात् ॥ प्रमादभिन्नविषयेतुसंवत्सरादूर्ध्वमाग्नित्यागेचांद्रम् ॥ द्विवर्षत्यागेचांद्रंसोमायनंच ॥ चांद्रद्वयंवा ॥ त्रिवर्षो
र्ध्वंसवत्सरंकृच्छ्राचरणंगोदानंचकृत्वापुनराधानम् ॥ संस्कारायकरणरूपेविभवेसत्यरक्षणरूपेचसुतत्यागेचांद्रादिष्वेकम् ॥ ॥ इतिस्वा
ध्यायाग्निसुतत्यागेप्रायश्चित्तानि ॥ पातित्यादित्यागकरणाभावेपिपितृव्यमातुलादिरूपबांधवैःसहसंभाषणसहभोजनादिवर्जनरूपेशक्तौ
सत्यांपालनाद्यकरणरूपेचबांधवत्यागेभार्यायां वेश्यात्वकरणेन जीवनरूपे स्त्रीधनोपजीवनकरणेच स्त्रियाजीवने हिंसयाजीवनेवश्याद्यर्थौषधी
भिर्जीवने जालबडिशादिविधानरूपे तिलेक्ष्वादिपीडनयंत्रप्रवर्तनरूपेच हिंस्रयंत्रप्रवर्तनेमृगयाद्यूताद्यष्टादशव्यसनेषु चचांद्रादिष्वेकं त्रैमासिकं
वा अत्यंताभ्यासेद्यूतेमृगयायांचपंचवार्षिकव्रतम् ॥ अनृतवादीतस्करोराजभृत्यावृक्षारोपणवृत्तिगरदोग्निदोहयगजरथारोहणजविरंगो
पजीवीश्वगणिकः शूद्राध्यापकोवृषलीपतिर्भांडिकः श्ववृत्तिर्ब्रह्मजीवीक्षत्रोपजीवीचिकित्सकोदेवलकोराजपुरोहितः कितवोमद्यपःकूटकारको

ऽपत्यनरपशुविक्रेतापाखंडयागभोज्यान्नाशिचेत्येतेब्राह्मण्यमिच्छंतोलब्धद्रव्यंत्यक्त्वात्रैमासिकंकुर्युः ॥ बहुकालाभ्यासे संवत्सरं चतुर्थका
लाहारःतत्रश्वगणिकः श्वगणजीवी ॥ भांडीकस्तूर्यादिजीविबिंदीवा ॥ श्ववृत्तिर्नीचसेवकः ॥ ब्रह्मजीवीमूल्येनद्विजकर्मकर्ता ॥ द्रव्यग्रहणेनपरदा
स्यकरणरूपेदासीभवनरूपेवाआत्मविक्रयेशूद्रसेवारूपेशूद्रप्रेष्यत्वेहीनजातिषुमैत्रीरूपेहीनसख्येचचांद्रादिष्वेकंत्रैमासिकंवा ॥ बहुकालंशूद्र
सेवायांचतुर्थकालेमितभोजनत्रिकालस्नानाभ्यांत्रिवर्षेणशुद्धिः ॥ समुद्रयानेब्राह्मणन्यासहरणेसर्वपण्येव्यवहारेभूम्यनृतेचशूद्रसेवावदुत्तम
जातिसख्यविघटनेऽपोष्यपरदिने पयःपारणम् ॥ अकृतसवर्णविवाहस्यहीनवर्णविवाहो हीनयोनिनिषेवणं साधारणस्त्रीसंज्ञकवेश्यादिसंभो
गश्च ॥ तत्राद्ये चांद्रादिष्वेकंत्रैमासिकंवा ॥ सकृदमतिपूर्वकवेश्यादिगमनेप्राजापत्यम् ॥ द्विरात्राभ्यासेकामतश्चसकृद्गमनेसप्तरात्रंसप्तकुशोदक
पानंमतिपूर्वकाभ्यासेचांद्रम् ॥ अत्यंताभ्यासेत्रैमासिकम् ॥ रेतःसेकात्प्राङ्निवृत्तौसचैलस्नानंगोभ्यऔषधीभारदानंच ॥ आजन्मात्यं
तानवच्छिन्नाभ्यासेगुरुतल्पवत् ॥ अप्रातिनैमित्तंनैमित्तिकस्यप्रायश्चित्तस्यावृत्तिर्नास्ति ॥ किंतुमत्यागमनाभ्यासेद्विगुणवृद्धिर्मासा
र्वाक् ॥ ततोमासगुणवृद्धिर्यावदब्दम् ॥ ततोद्विगुणवृद्धिर्यावत्पापाचरणम् ॥ अमत्यागमनाभ्यासेतुसकृत्कृतेयत्प्रोक्तंतत्त्रिभिर्दिनै
स्त्रिगुणम् ॥ मासात्पंचगुणम् ॥ षण्मासाद्दशगुणम् ॥ अब्दात्पंचदशगुणम् ॥ त्र्यब्दाद्विंशतिगुणम् ॥ ततोप्येवंप्रकल्प्यम् ॥ एवमुपपात
काभ्यासेऽनुक्तप्रकारविशेषेसर्वत्रोह्यम् ॥ महापातकाभ्यासेतुसकृत्कृतेयत्प्रोक्तंतद्द्वितीयेद्विगुणम् ॥ तृतीयेत्रिगुणम् ॥ चतुर्थेनिष्कृतिर्नास्तीत्या
दिकम् ॥ अगृहीताश्रमित्वमनाश्रमित्वम्॥वर्षपर्यंतमाश्रमंविनावस्थानेप्राजापत्यंकृत्वाऽऽश्रमस्वीकारः॥ द्वितीयेतिकृच्छ्रः ॥ तृतीयेकृच्छ्राति

कृच्छ्रम् ॥ अतऊर्ध्वंचांद्रादिइत्यापदि ॥ अनापदितुप्रथमेऽब्दे चांद्रादिष्वेकंत्रैमासिकंवा ॥ ततोवर्षेषुद्वित्रिचतुर्गुणम् ॥ परपाकरतिः परान्नपुष्टता ॥ चार्वाकादिशास्त्राभ्यासोसच्छास्त्रादिगमनम् ॥ स्वर्णाद्युत्पत्तिस्थानेषुराजाज्ञयाधिकारित्वमाकराधिकारस्तेषुभार्याविक्रयेचचांद्रादिष्वेकंत्रैमासिकंवा ॥ ॥ इतिपरान्नपुष्टतादिचतुरुपपातकप्रायश्चित्तानि ॥ ॥ अथासत्प्रतिग्रहेप्रायश्चित्तानि ॥ ॥ तत्रप्रतिग्रहस्यासत्त्वंचातिदुष्टचांडालादेः कर्मदुष्टपतितादेश्चदातृत्वेभवति ॥ कुरुक्षेत्रादिदेशेग्रहणादिकालेचभवति ॥ स्वरूपतोपिसुरामद्यमेषीकृष्णाजिनकालपुरुषमृतशय्योभयतोमुख्यादेरसत्त्वम् ॥ मद्यंवृक्षादिसंभवंधान्यसंभवासुरा ॥ तत्रनिमित्तद्वयसमावेशोयथापतितादेर्मेष्यादिप्रतिग्रहः ॥ तत्रनिमित्तद्वयसमावेशेब्रह्मचर्यपूर्वंगोष्ठेवासः ॥ प्रत्यहंत्रिसहस्रगायत्रीजपपूर्वकंमासंपयोव्रतम् ॥ अभ्यासेसदाजलेवासः ॥ षष्ठेकालेपयः पानंमासमेवंकुर्यात् ॥ त्रिचतुर्निमित्तसन्निपातेचैवम् ॥ अंतेविप्रभोजनमुभयत्र ॥ यदैकमेवनिमित्तंतदाचांद्रंपवित्रेष्टिर्मृगारेष्टिर्मित्रविंदेष्टिर्गायत्र्यालक्षजपोवा ॥ सर्वत्रानुक्तौदातृदेशकालद्रव्येष्वदुष्टेषुद्वादशनिष्कप्रमाणद्रव्यप्रतिग्रहेकायम् ॥ एवंसर्वत्रद्रव्यानुसारात्प्रायश्चित्तवृद्धिह्रासौ ॥ दातृदेशद्रव्यकालेषुअन्यतरदोषेप्रायश्चित्तस्यैकैकगुणवृद्धिः ॥ अल्पद्रव्याणामपिवासोगवादीनामेकैकप्रतिग्रहेगायत्र्यष्टसहस्रजपः ॥ ततोऽल्पत्वेभिक्षामात्रप्रतिग्रहेपुण्यमंत्राननुचारयेत् ॥ प्रायश्चित्तमिदंसर्वंप्रतिद्रव्येगृहीतद्रव्यत्यागोत्तरमेव ॥ त्यागश्चाप्सुप्रक्षेपः ॥ कस्मैचिद्दानंवा॥एकतरनिमित्तेतुत्यागप्रायश्चित्तयोर्विकल्पइत्याहुः ॥ षोडशमहादानान्यप्यसत्प्रतिग्रहः ॥ एकस्यमहादानस्यानेकैःप्रतिग्रहेतुनदोषः ॥ शस्त्रविषब्रह्मदंडहयरत्नगजातिललोहानां घृतशय्यालंकारवस्त्रादीनां तिलधेन्वाश्वप्रतिग्रहोऽसत्प्रतिग्रहः ॥ नवश्राद्धमासि

कश्राद्धगजच्छायासुभोजनंतीर्थेप्रतिग्रहश्चतथा ॥ विद्यातपोहीनेनप्रतिग्रहोपिउत्तमद्रव्यप्रतिग्रहोपिचासत्प्रतिग्रहः ॥ उत्तमत्वंचमूल्यतो
वचनाच्चदेवविप्रराज्ञांद्रव्यमुत्तमद्रव्यंगोभूसरस्वत्यश्च ॥ छांदोग्येतुअन्नदधिमधुत्राणगोभूरुक्माश्वगजाउत्तमाइत्युक्तम् ॥ देवलोरत्नक्षेत्रवे
श्महेमकुप्याभरणानिचेत्याह ॥ मृतशय्याप्रतिग्रहे पुनःसंस्कारेप्याधिकारः ॥ एवंसमुत्कर्षानृतेगुरोरलीकनिर्बंधेगुरोर्व्यभिचाराद्यभिशा
पेज्ञानतः कृतेमासंपयसावर्तनम् ॥ एतदेवाशुचिद्रव्यस्याग्रावंभसिचत्यागे ॥ अमत्याकृच्छ्रम् ॥ गुरुविषयेतुगुरुंप्रसाद्यकृच्छ्रस्नानाभ्यां
शुद्धिः ॥ एतानिस्मृत्यंतरोक्तोपपातकानिप्रासंगिकानि ॥ इत्यसत्प्रतिग्रहप्रायश्चित्तानि ॥ ॥ अथनिंदितान्नभक्षणेप्रायश्चित्तम् ॥
तत्रान्नमदनीयमात्रम् ॥ तस्यनिंदितत्वंचस्वभावकालसंपर्कक्रियाभावपरिग्रहैः ॥ तत्रस्वभावाल्लशुनादेः ॥ कालतः पर्युषितादेः ॥
संपर्काच्छ्वस्पृष्टादेः ॥ क्रियातोहस्तदानादिनाव्यंजनादेः ॥ भावादिक्षुरसादेः ॥ भवतिहिकस्यचिदिक्षुरसेभावोमदिरेयमिति ॥ परिग्र
हात्पतितान्नादेः ॥ तत्रस्वभावदुष्टलशुनगृंजनच्छत्राकविड्वराहग्रामकुक्कुटपलांडूनांप्रत्येकममत्यासकृद्भक्षणेसांतपनम् ॥ अभ्यासेयतिचां
द्रायणम् ॥ मत्यासकृच्चेच्चांद्रम् ॥ अभ्यासेतदावृत्तिः ॥ अत्यंताभ्यासेसुरापानसमम् ॥ प्रायश्चित्तांतेपुनरुपनयनमेतेषुसर्वत्र ॥ पुन
रुपनयनेचस्वाध्यायादिकालापेक्षावपनमेखलादंडभैक्ष्यचर्यादीनीच ॥ अत्रगृंजनंविषदिग्धबाणहतमृगमांसमितिकश्चित् ॥ कलिंजमिति
तन्नामेतिप्रांचः ॥ गृंजनंलशुनतुल्यः कंदइतिमिताक्षरा ॥ गाजराख्यंमूलं यदीयंपत्रंगायकाः कंठशुद्ध्यर्थंभक्षयंतिविटाश्चमदार्थंसपत्रविशेष
श्चेतिमाधवः ॥ चरकादिवैद्यकोक्तपलांड्वांतरभेदेषुच्छत्राकादिभेदेकवकादौचनरगोमांसादौचैवमेवयोज्यम् ॥ एतेषांमुखप्रवेशमात्रेव

॥ इतरौषधानाश्यव्या

लात्कारेणभक्षणेचानुपनीतबालेनसकृद्भक्षणेचगायत्र्याअष्टाधिकसहस्रेणमूर्धनिसंततविंदुपातेनोपवासेनचशुद्धिः ॥ सर्वत्रतत्कालच्छर्दितेधर्मप्रायश्चित्तम् ॥ गंध
धियुक्तस्यैतद्भक्षणेदोषोन ॥ अत्रापिपूर्वोक्तसंततजलाभिषेकउपवासश्चेतिस्मृत्यर्थसारे ॥ सर्वत्रतत्कालच्छर्दितेधर्मप्रायश्चित्तम्
वर्णरसैर्लशुनादितुल्यस्यभक्षणेसांतपनम् ॥ यतिव्रतिब्रह्मचारिणांतप्तकृच्छ्रादि ॥ लक्ताख्यंपक्षिणंकुसुंभंवार्ताकंकुंभीतकश्लेष्मातकफलानि
कवककृष्णसर्षपतंदुलीयकनालीकानालिकेरीक्षुखंडाख्यशाकानिकालिंदंवर्तुलालाबुंचभक्षयित्वा अरण्यकंटकिकुसुंभरक्तशिग्रुभूस्तृणकोवि
दारेषुक्षुद्रश्वेतकंटकीवृंताकेषुराजसर्षपाख्यशाकोदुंबरपूतिकाखण्डाख्यशणपुष्पशाल्मलेषु भक्षितेषु अन्येषु चकटुदुर्गंधिकंदमूलफलादिषुभ
क्ष्याभक्ष्यत्वेनसंदिग्धेषुव्रश्चनप्रभवलोहितवृक्षनिर्यासादिषु रेतोविण्मूत्रेषु करनिर्मथितदधिवाहिर्वोदिवाक्तविजश्चरुपुरोडाशेषुभक्षितेषु च अम
त्यासकृच्चेदुपवासः ॥ आवृत्तिरभ्यासे ॥ मत्यासकृच्चत्रिरात्रम् ॥ कामतोभ्यासेप्राजापत्यम् ॥ अत्यंताभ्यासेतप्तकृच्छ्रः पुनरुपनयनंच ॥
अन्यथापतेत् ॥ नील्यास्त्वमत्यासकृद्भक्षणेविप्रस्यचांद्रम् ॥ अभ्यासेमत्यासकृच्चाभ्यासेचावृत्तिः ॥ अत्यंताभ्यासेसांतपनम् ॥ संधिनी
यमसूस्यंदिनीमृतवत्साअनिर्दशामेध्यसेविन्यलपवत्सानांगवामनिर्दशाजामहिष्योरेकशफानां च महिषीवर्जितारण्यमृगाणांचाजावर्जितसर्व
द्विस्तनीनां च क्षीरेषु दधितत्संभवभिन्नशुक्तेषुचामत्यापीतेषुतेषांमत्यापानोत्तरंसमनंतरमेवच्छर्दनेचैकउपवासः ॥ मत्यात्रिरात्रम् ॥ अमत्या
भ्यासेचत्रिरात्रम् ॥ ज्ञानतोद्विस्त्रिरभ्यासेच्छर्दनेचपक्षंगोमूत्रयावकपानम् ॥ अत्यंताभ्यासेमासंतत् ॥ संधिनीवृषभेणोपजिगमिषुः ॥ स्यंदि
नीस्रवत्क्षीरा ॥ अविखरोष्ट्रनारीवानरविड्वराहश्वापदक्षीरेषुअमत्यासांतपनम् ॥ मत्यातप्तकृच्छ्रः ॥ अभ्यासेचांद्रंपुनरुपनयनंच ॥ अत्यं

ताभ्यासेसांतपनम् ॥ स्त्रियाःक्षीरंद्विजः पीत्वाकथंचित्काममोहितः ॥ पुनःसंस्कृत्यचात्मानंप्राजापत्येनशुद्ध्यति ॥ ब्रह्मचारियत्योःकृच्छ्र
स्ततप्तकृच्छ्रोवा ॥ शुक्तेषुदधितद्विकारश्चभोज्यः ॥ शूद्रस्यकपिलाक्षीरपानेननवाब्दंब्रह्महव्रतम् ॥ विप्रस्यापिहुतशेषातिरिक्ततत्पानेपशुत्व
प्राप्तिः ॥ सर्पसरीसृपमूषकमार्जारकृकलासककर्कटनकुलमंडूकशृंगिमयूरवानरकपिश्वगोमायुवृकसिंहव्याघ्रादिक्रव्याज्जंतुगजाश्वोष्ट्रखरैकशफा
नामुभयतोदंतानां च काकबकबलाकाहंसगृध्रजालपादचक्रवाकविविष्करपुंडरीककपिंजलभासचाषकुक्कुटप्लवचक्रवाककारंडवगृहचटककपो
तपारावतखंजनपांडूकशुकसारिकासारसटिट्टिभोलूकश्येनकाकरक्तपादतित्तिरिकोकिलाहारितमद्गुकलविंकक्रौंचदार्वाघाटादीनां मनुष्याणां
जलचरजलपक्षिणां प्राणिभक्षकाणां नखैर्विदार्यान्नादिभक्षिणां मत्स्यादिजंतूनांमत्स्यानां च सूनागतमांसभक्षणेशुष्कमांसभक्षणेचशशकशल्लक
कच्छपगोधाखड्गव्यतिरिक्तपंचनखमांसभक्षणेचैतेषां विण्मूत्ररक्तवसामज्ज्ञानां तदुच्छिष्टानां चभक्षणे चामत्या कायम् ॥ अभ्यासे महा
सांतपनम् ॥ मत्या तप्तकृच्छ्रो मत्याभ्यासे चांद्रम् ॥ अत्यंताभ्यासे पतनम् ॥ तेषां कर्णादिमलपङ्कभक्षणेर्धमितिस्मृत्यर्थसारे ॥ अम
त्यासकृद्भक्षणेएकोपवासः ॥ कामतोद्विगुणम् ॥ तथाऽभ्यासेत्रिरात्रसप्तरात्रद्वादशरात्रपक्षव्रतमासव्रतचांद्रायणान्यभ्यासाधिक्यतारतम्य
मालोच्ययोज्यानि ॥ अभ्यासेसर्वत्रव्रतांतेएकादिनंघृतप्राशनंपुनःसंस्कारश्च ॥ समुदितभक्षणाभ्यासेषाण्मासिकंसंवत्सरंचेतिप्राञ्चः ॥
एषांज्ञानतोभक्षणोद्गीरणेतुसांतपनम् ॥ अज्ञानतःप्राजापत्यम् ॥ अकामतोभ्यासेचांद्रम् ॥ कामतोभ्यासेषण्मासम् ॥ अत्यंताभ्यासेसं
वत्सरमितिमिताक्षरा ॥ एषांकेशनखप्राशनेअजाविमाहिषमृगाणां मांसभक्षणेमृल्लोष्टभक्षणेवाऽमत्याएकउपवासः ॥ मत्यात्रिरात्रम् ॥

एवंकीटपतंगकृमिजलचरास्थिरक्तभक्षणे रक्तवमने चापीति स्मृत्यर्थसारे ॥ मांसभांडेपक्वस्यान्नस्याशने त्र्यहं कुशपक्वपयःपानम् ॥
व्रतिनःकेशादेर्मुखप्रवेशमात्रेतप्तघृतंब्राह्मीरसंवापिबेत् ॥ केशादिभक्षणेतुसद्यःकुशहिरण्योदकसहितघृतप्राशनम् ॥ ज्ञानतोभ्या
सेत्रिरात्रोपवासो घृतप्राशनंच ॥ ब्रह्मचर्यादेर्मधुमांसादिभक्षणेऽधिकं त्रिरात्रं कार्यं कार्यंवा पुनरुपनयनंच ॥ ततो व्रतसमापनम् ॥
अज्ञानतः सकृद्गोमांसभक्षणे कायम् ॥ ज्ञानतो द्विगुणम् ॥ अज्ञानतोभ्यासे चांद्रम् ॥ समुद्रगानदीतीरेऽनडुत्सहितगौश्चदक्षिणा ॥
ज्ञानतोभ्यासेसंवत्सरम् ॥ अत्यंताभ्यासेपातित्यम् ॥ कपिखरविड्वराहादिरेतोविण्मूत्रपुरीषाणामन्यतमभक्षणेऽन्येषांचामेध्यानामेतद्भ
क्षणेचांद्रम् ॥ अज्ञानतस्ततकृच्छ्रम् ॥ अभ्यासादावाधिकंकल्प्यम् ॥ पुनरुपनयनंसर्वत्र ॥ बलाद्रेतोमूत्रादिपानेप्राजापत्यम् ॥ ऊनै
कादशवर्षस्याप्येतदेव ॥ गोमूत्रपुरीषंमेध्यम् ॥ अथोच्छिष्टाद्यभक्ष्यभक्षणप्रायश्चित्तम् ॥ तत्रकाकादिपक्षिश्वापदाखुबिडालनकुलादिदूषि
तेऽन्नरसेचकेशाद्यापन्नेदेवद्रोण्यादौद्रव्यशुद्धिरहितेचान्नेअमत्याभक्षितेएकाहंब्राह्मीसुवर्चलापानम् ॥ मत्याचेत्त्रिरात्रम् ॥ माधवीधेनुतिलदर्भो
दकैःप्रोक्षणमकृत्वाभोजनेएतत् ॥ मार्जाराद्युच्छिष्टस्यतथाप्रोक्षणैःशुद्धिस्मरणादित्युक्तम् ॥ अल्पद्रव्यंचेदमत्याभ्यासेकृच्छ्रम् ॥ मत्याभ्यासे
पक्षंयावकव्रतंव्रतस्थस्य ॥ ब्रह्मक्षत्रियवैश्यशूद्रोच्छिष्टेतुविप्रएकत्रिपंचसप्तरात्राणिक्रमेणपंचगव्यंपिबेत् ॥ अभ्यासेप्येषामावृत्तिः ॥ मत्याभोज
नेत्वेतान्येवसोपवासानिकुर्यात् ॥ मत्याभ्यासेकृच्छ्रातिकृच्छ्रतप्तकृच्छ्रचांद्राणि ॥ क्षत्रादौपादहानिः ॥ अन्यस्यविप्रोच्छिष्टभोजनेसकृद
जानतःकृतमहाव्याहृतिभिर्मंत्रितपयःपानम् ॥ ज्ञानतस्तदभ्यासादौसांतपनम् ॥ उच्छिष्टंचात्रैकपंक्त्युपविष्टविप्रादीनांभोजनमध्येएकेना

पिपात्रत्यागेशेषमन्नंशूद्रादिविषयेतद्भोजनोत्तरंपाकपात्रेवशिष्टमप्युच्छिष्टम् ॥ एवंविधशूद्रोच्छिष्टभोजनेत्रिरात्रोपवासोऽघमर्षणजपः ॥ कामत
स्त्वेतद्विषयेपंचरात्रंसप्तरात्रमुपवासश्चांद्रंवाऽभ्यासादितारतम्येनयोज्यम् ॥ गुरुभिन्नविप्रोच्छिष्टभोजनेश्वोपहतभोजनेकृच्छ्रम् ॥ भोज
नपात्रेभुक्तशेषमात्रोच्छिष्टम् ॥ श्वशूद्रभुक्तशेषभोजनंपात्रेऽवशिष्टंकामतोभुक्त्वातप्तकृच्छ्रंकार्यम् ॥ अकामतःप्राजापत्यम् ॥ अभ्या
सेपराकंचांद्रत्रयंवा ॥ अपत्यभुक्तशेषभक्षणेचांद्रम् ॥ क्षत्रियवैश्यगर्दभादिभुक्तशेषस्यपात्रावशिष्टस्यभोजनेपादोनकृच्छ्रंसार्धकृच्छ्रत्रया
दिकेचित् ॥ भांडस्थेऽन्नेकेशपिपीलिकामेध्यसेविकीटैरुपहतंतावन्मात्रमुद्धृत्यमृद्भस्मताम्रवैडूर्यहिरण्यरजतादिभिर्गोवालदर्भयुक्तवारिणा
शेषंप्रोक्षयेत् ॥ हस्तास्थितमेवंभूतंत्यजेत् ॥ मुखस्थंनिष्ठीव्यघृतंप्राशयेत् ॥ श्वचांडालरजस्वलासूतिकापतितादिदृष्टान्नमपिमृद्भस्म
हेमांबुभिःप्रोक्षयेदितिमयूखस्मृतिः ॥ मनुष्यरेतोविण्मूत्रभक्षणेवर्णाःक्रमेणतप्तकृच्छ्रातिकृच्छ्रकायत्रिरात्राणिकुर्युः ॥ मत्याचांद्रतप्तकृच्छ्राति
कृच्छ्रकायानिपुनःसंस्कारश्चोभयत्र ॥ अंत्यजानांभुक्तशेषस्यपाकपात्रावशिष्टस्यभक्षणेवर्णक्रमेणचांद्रमहासांतपनषड्रात्रत्रिरात्राणि ॥
अभ्यासेद्विगुणम् ॥ निरंतरेपतनम् ॥ भोजनपात्रावशिष्टतदुच्छिष्टभोजनेद्विगुणम् ॥ सहभोजनेत्रिगुणम् ॥ अत्रपुनःसंस्कारोयुक्तः ॥ मत्या
भ्यासेपतनम् ॥ कानिचिदुच्छिष्टभोजनप्रायश्चित्तानिप्रकीर्णकप्रसंगेदर्शितानि ॥ अथाशुचिद्रव्यस्पृष्टाभक्ष्यभक्षणेप्रायश्चित्तम् ॥ तत्रकेश
कीटनीलीलाक्षास्थिस्नायुचर्मरुधिरविण्मूत्रमांसवसामज्जाशुक्रसुरास्पृष्टस्य महापातकिदृष्टस्यदुष्टपक्ष्यवलीढस्य विड्वराहाद्युच्छिष्टस्यगवा
घ्रातस्यशुष्कपर्युषितयोश्चवृथापक्वस्यदैवपित्र्यान्नस्यहोमार्थहविषांचाशनेपानेचामत्याचेदुपवासः ॥ मत्याकृच्छ्रपादोऽल्पसंसर्गेमहासंसर्गेत्व

धकृच्छ्रः ॥ तत्रापिसंस्पृष्टामेध्यादेरसोपलब्धौतप्तकृच्छ्रः ॥ आविज्ञातजात्यस्थ्यादिदूषितेकर्णादिमलपङ्कदूषितेचार्धम् ॥ जलपानसमयेमुखानिः सृतंजलंयदिभोजनभाजनेपतेत् तदातद्भाजनान्नभोजनेचांद्रम् ॥ इदंज्ञानतोत्यंताभ्यासे ॥ अकामतोऽभ्यासेसकृत्कामकृतंचत्रिरात्रम् ॥ सुराभिन्नगौडीमाध्वीमद्यवासितशुष्कभांडस्थोदकस्यज्ञानतःसकृत्पानेच्छर्दनेचत्र्यहंकुशमूलादिपक्वक्षीरपानम् ॥ तदभ्यासेचैतदेवषड्रात्रम् ॥ ज्ञानतस्तुपंचाहंशंखपुष्पीपक्वपयःपानम् ॥ तथाभ्यासेसप्तरात्रंगोमूत्रयावकपानम् ॥ अत्यंताभ्यासेद्वादशाहंब्राह्मीपक्वपयःपानंप्रत्यहमष्टसहस्रगायत्रीजपश्च ॥ अच्छर्दनेनजीर्णत्वेएतदेवतत्रतत्रद्विगुणम् ॥ एवंभांडस्यार्द्रत्वेपितालादिमद्यभांडस्थोदकपाने एतदर्धम् ॥ शुष्कसुराभांडस्थोदकपानेएकउपवासः ॥ परेह्निघृतप्राशनमात्रम् ॥ तादृशभांडस्थपर्युषितजलपानेच्छर्दनेचत्र्यहंशंखपुष्पीपक्वक्षीरपानम् ॥ अकामतोद्वित्रिरभ्यासेपंचरात्रंतत् ॥ कामतःसकृत्पानेसप्तरात्रम् ॥ तथाभ्यासेपक्षम् ॥ अत्रसर्वत्रजलपानस्यतपस्त्वाज्जलमल्पंपेयमित्याहुः ॥ जीर्णत्वेआर्द्रभांडस्थजलस्यवमनेचप्राग्वत् ॥ आर्द्रभांडस्थोदकपानेजीर्णेचांद्रंकामतः ॥ अकामतःषडुपवासाः ॥ अभोज्यान्नभांडस्थितजलदुग्धदधिपानेब्रह्मकूर्चः ॥ शूद्रस्यात्रसर्वत्राविपर्ययेकिंचिद्दानमेव ॥ अंतःस्थितक्लिन्नमृतपंचनखखरविड्वराहादियुक्तात्यंतोपहतकूपादिजलपानेषडुपवासाः ॥ अतिकृच्छ्रोवा ॥ व्रतांतेपंचगव्याशनंचआक्लिन्नेउपवासत्रयंपंचगव्यंचांते ॥ शूद्राणांनक्तम् ॥ इदंज्ञानतोऽभ्यासे ॥ अकामतोऽर्धम् ॥ प्राञ्चस्तुअकामतःप्रागुक्तंकामतस्तुद्विगुणमित्याहुः ॥ तादृङ्मनुष्यशवयुक्तकूपादिजलपानेतुअज्ञानतःसकृच्चषडुपवासाः ॥ कामतोभ्यासेचपराकः ॥ मत्याभ्यासेतप्तकृच्छ्रः ॥ अधिकतराभ्यासेचांद्रम् ॥ तादृशस्थूलतडागादिजलपानेतुन्यूनं

कल्प्यम् ॥ विण्मूत्रास्थ्यादिदूषितकूपादिजलपानेत्रयउपवासाः ॥ तादृशकुंभस्थजलपानेसांतपनम् ॥ इदमज्ञानतः ॥ कामतस्तुद्विगुणम् ॥
पूर्वोक्तकूपादौपानेव्यतिरेकेणस्नानमात्रे त्वेक उपवासस्त्रिषवणस्नानं गायत्रीजपश्च ॥ चांडालादिखाततडागादिषुजानुदघ्नादल्पपरिमाण
जलेषुतथाविधजलासुचांडालादिकसंपर्कयुतह्रदपुष्करिणीषुचाकामतोजलपानेनक्तम् ॥ कामतस्त्वेकउपवासः ॥ अन्यखातितचांडालादि
परिगृहीततादृशकूपादिजलपानेएतदर्धम् ॥ अभ्यासेकृच्छ्रम् ॥ कामतोभ्यासेद्विगुणम् ॥ जानुदघ्नह्रदपुष्करिण्यादिषुमहाजलाशयेचनदोषः
तादृशकूपेतुविप्रस्यमहासांतपनम् ॥ क्षत्रियादीनांकृच्छ्रकृच्छ्रार्धपादाःअमत्याऽर्धम् ॥ अशक्तःपंचगव्यंपिबेत् ॥ चांडालादिभांडस्थजल
पानेकूपवत् ॥ चांडालादेःकूपभांडादिजलस्यपानोत्तरंवमनेविप्रस्यकृच्छ्रम् ॥ रजकाद्यंत्यजखातकूपभांडादिजलतद्भांडस्थपयोदध्यादिपा
नेत्वमत्याद्विजाःक्रमेणब्रह्मकूर्चपानेनत्रिद्व्येकोपवासान्कुर्युः ॥ शूद्रस्तूपवासंशक्त्यादानंचकुर्यात् ॥ मत्यासर्वत्रद्विगुणम् ॥ अंत्यजखातवा
पीतडागादिषुअल्पजलेषुपानादिकरणेएकउपवासोमत्याद्विगुणम् ॥ अमत्याभ्यासेकायम् ॥ मध्यमजलेषुपंचगव्यम् ॥ महत्सुनदोषः ॥ अ
त्रसर्वत्रपुनःसंस्कारइतिकेचित् ॥ शूद्रामेध्यसेविकीटादिस्पृष्टान्नभोजनेत्वहोरात्रमभोजनम् ॥ अथचांडालाद्यन्नभोजनेप्रायश्चित्तम् ॥ तत्र
ज्ञानतःसकृच्चांडालाद्यन्नभक्षणेचांद्रम् ॥ अज्ञानतस्तप्तकृच्छ्रः ॥ एककालेएकप्रयत्नोपक्रमाणांग्रासानामेकस्मिन्प्रयोगेभोजनेसकृद्भो
जनम् ॥ एवंपुनर्भोजनेऽभ्यासः ॥ वारत्रयेऽत्यंताभ्यासः एवंसर्वत्रबोध्यम् ॥ भवदेवस्तुअज्ञानतःसकृद्भोजनेतप्तकृच्छ्रम् ॥ अभ्यासेचां
द्रायणम् ॥ ज्ञानतोद्वैगुण्यमित्याह ॥ सिद्धान्नार्थम् ॥ सक्तुजलादौशुष्कान्नेआमान्नेतुतदर्धमात्रंबोध्यम् ॥ बलात्सकृच्छुष्कतदन्नभोजनेउ

पवासत्रयम् ॥ बलात्सिद्धान्नभोजनेपराकः ॥ ज्ञानाभ्यासेचांद्राभ्यासः ॥ अज्ञानतोऽभ्यासेतप्तकृच्छ्राभ्यासः ॥ चांडालादिपक्वान्नाशनेसर्वत्र
पुनरुपनयनम् ॥ कामतश्चतुर्विंशतिवारंभोजनेपातित्यम् ॥ अज्ञानस्तुतद्द्विगुणवारभोजनेतत्रचद्वादशवार्षिकंप्रायश्चित्तम् ॥ यवनम्लेच्छ
यावनानामन्नभोजनेप्येवम् ॥ अत्रप्रायश्चित्तेनपापनाशेपिवचनान्नव्यवहार्यता ॥ द्विजस्यज्ञानात्स्वेच्छयाचांडालयवनादीनांदासत्वांगीका
रेतुप्राजापत्यद्वयम् ॥ पुंश्चल्यभिशस्तम्लेच्छचांडालादीनांबलादेकमासंदासतामापन्नोद्विजोबलात्कारितगोवधोच्छिष्टमार्जनोच्छिष्टभक्षण
तत्स्त्रीसंगादिःप्राजापत्येनशुद्ध्यति आहिताग्निश्चांद्रेण ॥ संवत्सरोपितस्यप्राजापत्यंपराकश्च ॥ शूद्रस्यसंवत्सरावासेपक्षंयावकपानम् ॥
मासंवासेकृच्छ्रपादः ॥ मयूखेतुप्राजापत्यादिकंमासमात्रेगोवधादौतत्प्रातिस्विकंतत्प्रायश्चित्तमकामकृतेविहितंकार्यमित्युक्तम् ॥ एवंवर्षपर्यं
तंप्रायश्चित्तकल्पनाकार्या ॥ चतुर्वर्षपर्यंतमितिकेचित् ॥ अग्रेपातित्यात्प्रायश्चित्ताभावः ॥ एतदेवज्ञानाच्छूद्रादिदासत्वांगीकारे ॥ अज्ञाना
दर्धमित्याहुः ॥ चांडालादिस्पृष्टान्नभोजनेप्राजापत्यम् ॥ ज्ञानतोद्विगुणम् ॥ एतदेवपतितकुणिरजस्वलादिस्पृष्टभोजने ॥ अज्ञान
तःसकृच्चांडालरजस्वलापतिताद्युच्छिष्टभोजनेचांद्रम् ॥ तद्भोजनानंतरंपाकपात्रेऽवशिष्टमन्नंतदुच्छिष्टम् ॥ ज्ञानतोद्विगुणम् ॥ चांडा
लादिभोजनपात्रावशिष्टरूपोच्छिष्टभक्षणेतुप्रकीर्णकप्रसंगोक्तंज्ञेयम् ॥ क्षत्रियवैश्ययोरापदिबलात्कारेऽन्नेतरचर्विततांबूलाद्युच्छिष्टभोजनेच
क्रमेणकार्यंकार्याधम् ॥ विप्रस्यतत्रापिचांद्रमेव ॥ क्षत्रविशोरप्यापदभावेऽन्नरूपोच्छिष्टभोजनेचचांद्रमेव ॥ सर्वत्राज्ञुच्छिष्टादुच्छिष्टेद्वैगुण्यम्
तत्रापिपाकपात्रविशिष्टोच्छिष्टाद्भोजनपात्रावशिष्टोच्छिष्टेद्विगुणमधिकंवाकल्प्यम् ॥ तथाचतत्स्पृष्टमात्रात्तद्द्विगुणंतद्धस्तदत्तस्यतद्गृहपक्व

स्यवाभक्षणेकल्प्यम् ॥ सहभोजनेत्रिगुणम् ॥ उच्छिष्टेचतुर्गुणमित्यादिबोध्यम् ॥ चांडालादिसंसर्गिणोऽन्नस्यतत्पाकस्यभोजनेकृच्छ्रार्धम्
शुष्कादौतदर्धादिचांडालादिस्पृष्टजलक्षीरदध्यादिपानेलघुसांतपनम् ॥ एतत्पीतशेषांबुपानेषडुपवासपूर्वकंपंचगव्यपानमज्ञानतः ॥
ज्ञानतोद्विगुणम् ॥ अभ्यासेआवृत्तिः ॥ अज्ञानतःसकृच्छौंडिकाद्यन्नभोजनेमासंगोमूत्रयावकपानम् ॥ शुष्कान्नेतदर्धंषडुपवासावा ॥
आमान्नेतदर्धम् ॥ ज्ञानतोद्विगुणम् । अभ्यासेआवृत्तिः ॥ ज्ञानतोऽष्टधाभोजनेकृच्छ्राब्दम् ॥ अज्ञानतस्तथात्वेचांद्रद्वयम् ॥ ज्ञाना
दष्टचत्वारिंशद्वारंभोजनेपातित्यम् ॥ अज्ञानतःषण्णवतिवारभोजनेतत्रद्वादशाब्दम् ॥ ज्ञानतःसकृदेतदुच्छिष्टान्नभोजनेविप्रस्यचांद्रम् ॥
क्षत्रियवैश्ययोस्तत्तत्कृच्छ्रः ॥ एतदर्धमेतत्स्पृष्टमात्रान्नभोजने ॥ शुष्कान्नस्योच्छिष्टभोजनेप्येवम् ॥ अत्राशक्त कुशोदुंबरबिल्वाद्यैःपनसांबु
जपत्रकैः ॥ शंखपुष्पीसुवर्चादिकाथंपीत्वाशुद्ध्यति ॥ तत्पीतशेषजलपानेउपवासत्रयपूर्वकंपंचगव्यपानमज्ञानतः ॥ ज्ञानतोद्विगुणम् ॥
अभ्यासेआवृत्तिः ॥ गवोच्छिष्टाशनेच्छर्दनेएकउपवासःपंचगव्यपानंच ॥ अभ्यासेउपवासत्रयम् ॥ चतुर्थेपंचगव्यम् ॥ अच्छर्दने
ज्ञानतःसकृद्भोजनेप्येतदेव ॥ मतिपूर्वकाभ्यासेऽतिकृच्छ्रः ॥ केचिद्धकाकोच्छिष्टेपुनःकृतपाकपर्युषितान्नेस्त्रीशूद्रोच्छिष्टेचअन्नेभुक्तेप्ये
वमेवप्रायश्चित्तमाहुः ॥ प्रपाजलपानेसीरवृक्षानिर्यासाधारपात्रस्थजलपानेनौकाजलनिःसारिणीपात्रस्थजलपानेकूपादेश्चर्मपुटकानिःसारि
तजलपानेचसचैलस्नानपूर्वकमुपवासः ॥ अशक्तस्यपंचगव्यपानम् ॥ आपदितदेवजलंभूमिष्ठंकृत्वापात्रांतरेणोद्धृतंपेयंप्राणापादिदो
षेन ॥ शूद्रभांडस्थजलपानेउपोष्याबिल्वपत्रपलाशकुशकाथोदकपानम् ॥ नवभांडेतुनदोषः ॥ एवंपयोदध्यादावपि ॥ अत्रसर्वत्रपुनरु

क्तिः प्रासंगिकीवैलक्षण्योक्तिःस्मृत्यंतरानुरोधात् ॥ तत्रशक्त्याद्यपेक्षयाव्यवस्था ॥ शातातपः ॥ घृतंतैलंदधिक्षीरंतथैवेक्षुरसो गुणः ॥ शूद्रभांडास्थितंतक्रंतथामधुनदुष्यति ॥ ॥ अथभावदुष्टादिभक्षणेप्रायश्चित्तम् ॥ तत्रयद्दर्शनआकारतोवाविसदृशत याजुगुप्सितशरीरमलादिभावनांजनयति अरिप्रयुक्तगरादिशंकांवाजनयति तद्भावदुष्टम् ॥ क्षुधार्तश्चनकोभुंक्तेमामकंत्वन्नमेवहि ॥ ब्रूतेन्यर्थाशोयस्त्वेवंतद्वाग्दुष्टम् ॥ काकियाऽस्मिन्निितिविनिंद्यदीयतेयत्तच्च ॥ तयोर्भोजनेकामतःकृतेत्रिरात्रमुपवासः ॥ गोमूत्रयावक पानमित्यन्ये ॥ अज्ञानतोर्धम् ॥ छर्दनेघृतप्राशनम् ॥ भक्ष्याभक्ष्यत्वेनशंकितवस्तुभक्षणेअक्षारलवणम् ॥ रूक्षांत्राह्मीसुवर्चलांपिबेत् ॥ त्रिरात्रंशंखपुष्पींवापयसासह ॥ कुशपद्मोदुंबरपलाशबिल्वपत्रक्वाथंवापिबेत् ॥ शंकायाश्चाविज्ञानेद्विगुणम् ॥ अज्ञानतःशंकितभक्षणेशुद्ध्य र्थंवर्षांतेत्रीन्द्वावेकंवाकृच्छ्रान्कुर्यात् ॥ अथकालदुष्टाशनेप्रायश्चित्तम् ॥ ॥ कालदुष्टमस्नेहाक्तपर्युषितादि ॥ मत्यातद्भक्षणेत्रिरात्रं यावकव्रतम् ॥ अमत्यात्वेकउपवासः ॥ अनिर्दशगोक्षीरादिपानेचैवम् ॥ यवगोधूमपयोदधिपिष्टविकारस्नेहपक्वेस्नेहाक्तान्नादौनदोषः ॥ शृंगास्थिदंतशुक्तिशंखकपर्दजनितपात्रैः कंदशालूकजैश्चजलंपीत्वानवोदकंचवर्षाकालेत्र्यहादर्वाक् अकालेचदशाहादर्वाक्पीत्वापंचगव्यंपिबे त् ॥ मत्योपवासः ॥ ॥ ग्रहणकालेनवश्राद्धेचभोजनेग्रामयाजकान्नभोजनेचचांद्रम् ॥ ग्रहणनिमित्तनिषिद्धकालेसंधिकालेऽतिप्रा तरतिसायंकालेचभुक्त्वारात्रौधानादधिसक्तुतिलसंबद्धान्नभोजनेएवमादिष्वनादिष्टप्रायश्चित्तेषुप्राणायामशतम् ॥ मत्योपवासः ॥ अम त्योपवासइत्यन्ये ॥ अथगुणदुष्टभोजनेप्रायश्चित्तम् ॥ शुक्तानिकषायादींश्चअन्यान्यमेध्यानिचामत्यापीत्वाभुक्त्वाचोपव

सेत् ॥ मत्यात्रिरात्रंयावकम् ॥ आमलकयुक्तकांजिकायांनदोषोभिधारणेच ॥ शुक्तंकालवशादम्लतांगतम् ॥[३] उद्धृतसारपिण्याक
मंथितादिभक्षणेमत्यात्रिरात्रंयावकम् ॥ अमत्यार्धम् । छर्दित्वाघृतंपिबेत् ॥ वैश्वदेवादिरहितान्नभोजनेआतिथिदेवतादिप्रयोजनमनुद्दिश्य
वृथापक्वस्यकृसरसंयावकपायसापूपशष्कुलीमधुमांसादिभक्षणेष्वमत्योपवासः ॥ मत्यात्रिरात्रंयावकम् ॥ कायमभ्यासे ॥ आहिताग्नि
स्त्वमत्यात्रिरात्रम् ॥ मत्याकायंकुर्यात् ॥ हस्तदानादिक्रियादुष्टस्यामत्याभोजनेनक्तम् ॥ मत्यातूपवासःपंचगव्यंच ॥ तत्रमाक्षिकमिक्षुर
सविशेषरूपंफाणितंशाकंगोरसंलवणघृतानिचैतानिहस्तदत्तानिदुष्टानि ॥ अमत्याभ्यासेतूपवासः ॥ मत्याभ्यासेत्रिरात्रम् ॥ अत्यंताभ्यासे
सांतपनम् ॥ ॥ अथश्राद्धभोजनेप्रायश्चित्तम् ॥ ॥ तत्रांतर्दशाहेनवश्राद्धानि ॥ एकादशाहश्राद्धमारभ्योनाब्दांतानिषोडशैकोद्दिष्टा
निनवामिश्राणि ॥ सपिंडीकरणंमिश्रम् ॥ ततःपराणिपुराणानि ॥ तत्रनवश्राद्धभोजनेकायम् ॥ अनापद्यत्रचांद्रम् ॥ एकादशाहेम
हैकोद्दिष्टेप्येवम् ॥ पादोनंकायमापदि ॥ अनापदितुचांद्रंकायंचेत्यन्ये ॥ द्वादशाहेआद्यमासिकेचोनमासिकेचपादोनंकायमेव ॥ अत्रा
नापदिकायम् ॥ अन्येपराकमाहुः ॥ द्वितीयमासिकेत्रैपक्षिकमासिकेऊनषाण्मासिकेऊनाब्देचार्धकृच्छ्रम् ॥ अनापदिपादोनम् ॥
त्रिमासाद्यब्दमोक्षांतेषुसापिंडनेचाब्दिकेचोपवासःपादकृच्छ्रोवा ॥ अनापदितुत्रिरात्रंकृच्छ्रार्धंवा ॥ अन्येत्वनापदित्रैपक्षिके
तिकृच्छ्रः ॥ षाण्मासिके कृच्छ्रः ॥ आब्दिकेआपदित्रिरात्रं गोमूत्रयावकपानम् ॥ अनापदिकायपादमित्याहुः ॥ तदु
त्तरंप्रत्याब्दिकेत्रिवर्षपर्यंतंनक्तम् ॥ अनापदितूपवासः ॥ गुरुविप्राद्यर्थकद्रव्यार्थंनवश्राद्धभोजनेत्रिरात्रम् ॥ महैकोद्दिष्टेद्वादशाहादौ

चात्रिरात्रम् ॥ द्वैमासिकाद्दौउपवासः ॥ त्रिमासाद्दौनक्तंपंचगव्यंच ॥ मत्याब्दिकेऽन्यपुराणेपुचषट्प्राणायामाः ॥ वृद्धौत्रयःप्राणाया
माः ॥ तत्रैवनिस्पृहस्यभोक्तुर्जपशालिनोवातदर्धम् ॥ क्षत्रियादिश्राद्धेषुद्वित्रिचतुर्गुणानिक्रमात्कार्याणीतिस्मृत्यर्थसारे ॥ अन्यत्रतुपा
वणश्राद्धेषट्प्राणायामाः ॥ त्रिमासादिवत्सरांतमुपवासः ॥ सपिंडनश्राद्धेचआद्यमासिकेपादोनकृच्छ्रः ॥ त्रैपक्षिकेतदर्धम् ॥ द्वैमासिकेपं
चगव्यपानंचप्रत्यब्दंनक्तमिदमापदि ॥ अनापदितुद्विगुणमिति ॥ चांडालोदकसर्पविप्रपशुदंष्ट्रिविद्युत्पातपतनाविषोद्बंधनानाशकैर्मृतानांस्ते
नपतितावभोज्यान्नांचनवश्राद्धेषुचांद्रम् ॥ प्रथममासिकेचांद्रंपराकश्च ॥ द्वादशाहाद्दौपराकएव ॥ द्विमासत्रिपक्षादावतिकृच्छ्रः ॥ त्रिमासा
दौकायम् ॥ आब्दिकेपादकृच्छ्रः ॥ द्वितीयवर्षादावुपवासः ॥ सम्यग्विषयेपिद्रव्यार्थभोजनेप्येवमेव ॥ अपांक्तयानामेकादशाहश्रा
द्धभोजनेशिशुचांद्रम् ॥ यतिव्रतिब्रह्मचारिणांतुप्रथममासिकादिषुनवश्राद्धेसूतकान्नस्यचभोजनेउक्तंकृत्वाऽधिकत्रिरात्रोपवासप्राणायाम
त्रयपूर्वकघृतप्राशनंचकृत्वाव्रतशेषसमापनम् ॥ अनापदितुकार्यंत्रिरात्रोपवासोद्वादशप्राणायामःपंचगव्याशनंचाधिकम् ॥ कामतोभो
जनेपुनरुपनयनमित्यन्ये ॥ अभ्यासेतूक्तकृच्छ्रादिद्विगुणम् ॥ आमहेमसंकल्पितश्राद्धेषुतत्तदर्धानि ॥ गुरुविषयेतूपवासोनक्तंषट्त्रिंश
त्प्राणायामाश्च ॥ अतिश्रोत्रियादिपुराणश्राद्धेषुअनुक्तप्रायश्चित्तेषुसर्वश्राद्धेषुचगायत्र्यादशकृत्वोपःपीत्वाशुद्ध्यति ॥ ततःसंध्योपास
नहोमादियथोचितंकुर्यात् ॥ वृद्धिश्राद्धेप्राणायामत्रयम् ॥ चौलनामकरणजातकर्मांगश्राद्धेषुचूडाहोमांतेचसीमंतेसोमेचाधानांगब्रह्मौदने
चामत्यापदिचभुक्तोसांतपनम् ॥ मत्याऽपदिचांद्रम् ॥ अन्यसंस्कारेषूपवासः ॥ अनापदित्रिरात्रम् ॥ अन्यदत्ताकन्याऽन्यस्मैपुनर्दत्ता

या सा पुनर्भूः ॥ असंस्कृतेपूर्वंगर्भेप्रसूतेसतिद्वितीयगर्भेसंस्कारोयस्याःसापुनारेता ॥ ऋत्वादिषोडशाहात्पश्चादेवयागर्भिणीसारे
तोधा ॥ भर्तृशासनोल्लंघिनीकामचारिणी ॥ आसांगर्भेषुभुक्तौपूर्ववत्सांतपनंचांद्रंवा ॥ सर्वस्त्रीप्रथमगर्भेषुचैवम् ॥ अनिर्द
शाहनवश्राद्धेकामतोभुक्तवतोविप्रस्यानापदिसंवत्सरपर्यंतंभोजनात्प्राक्संहिताऽध्ययनमितिकेचित् ॥ ॥ अथपरिग्रहाशुचिदुष्टभोजने
प्रायश्चित्तानि ॥ ॥ तत्रराजपुरोहितराजभृत्यवैश्यशूद्राणांक्लीबाजाविकमाहिषिकस्थानिकभूपालानांस्तेनगायकलक्षकवार्धुषिकदीक्षाव
स्थितानांकदर्यबद्धाभिशस्तपुंश्चलीदांभिकवैद्यनटनर्तकगणकानां भगवृत्तिस्त्रीसदृशचेष्टितनिराचारनिषिद्धाचाराणामाचार्याग्निगुरुधर्मशा
स्त्रगोब्राह्मणादिद्वेषिणां संवत्सराभ्यस्तोपपातकानांचर्मकारस्वर्णकारशौंडिकव्याधपुनर्भूजातभ्रूणघ्नविषकारशस्त्रकारलोहकाराणां मत्तोन्म
त्तक्रुद्धातुरगणगणिकानां श्वचक्रमद्यस्त्रीमृगजीविनामश्वरथगजारोहणवृत्तीनामुच्छिष्टभोजिक्रूरोग्रपतितपिशुनानां रजकनिर्णेजककैवर्तका
नांशूद्रयाजकाध्यापकचित्रकारशिल्पिब्रह्मविक्रयिणां वृथाश्रम्यनाश्रम्याश्रमभेदिनामपण्यविक्रेतृसोमलताविक्रेतृशैलूषतंतुवायतुन्नवायकि
रातानां यतिब्रह्मचारिणोर्व्रात्यतद्याजकादीनां नित्यरोगियोनिसंकीर्णसंकरजातिकुंडगोलकतदन्नाशिनां घाटिकाविप्रगादेववृत्तिघ्नानां परि
देवनसंबंधिनां गरदसूपकारवेणवोपजीविपाखंडिलिंगानां सूतादिप्रतिलोमजानां कर्मारकृतघ्नोग्रदंडपातिनां पुण्यसोमयागात्मविक्रयिणामनृ
तवादिद्वेषिहेमकाराणां वृक्षारोपणवृत्तीनां कूटकृद्वृषलीतत्पतितत्संबंधिनां तुर्यादिस्वनव्यतिरिक्तकरणनृपार्तप्रबाधकानां कितवमृगयाजीवि
निषादतत्कर्मकृतांमूल्येनाद्विजकार्यकर्तृणां प्राणिवधजीविलोकायतिकदेवलकस्त्रीजितकुष्ठिकुनखिश्यावदंतानां पित्रादिविवदमानस्य नद्या

पर्याहितपरीष्टपुनर्भ्वग्रेदिधिषूपतितज्जातानां चक्रितौलिकप
दिसंतरणजीविग्रामयाजकतत्पुरोहितवणिजपशुमारकदुर्लोमसेवककांडपृष्ठानां पतिपुत्ररहितस्त्रियाः पंचयज्ञानकृत्वानित्यपरान्नभोजिविरूपपरपाकनिरत
क्षिरक्षकसमुद्रतारकहीनांगातिरिक्तांगानामपुत्रकानग्निकमुमूर्षूणां सुतकन्यास्त्रीसत्य
स्यपंचमहायज्ञकरणंविनाभोजनरूपपरपाकनिवृत्तस्यापंचसंज्ञकज्ञानवर्जितग्रहस्थस्याचार्यपितृमातृसुतगुर्वग्नित्यागिनां चतुःषष्टिपलान्नभक्षकरूपकुंडाशिनः
विक्रयिणां गृहस्थितोपपत्तिकज्ञातोपपत्तिकस्त्रीपरिग्रहिणो द्यूतजीविविविविनिषेधातीतसूतकिकुलालानां स्वर्णादिसदृशरूपकर्तॄणामित्यादिपापिनामेषां
कांस्यसीसादिकारवाद्योपजीविभांडवस्त्रादिकर्तृपश्वादिविक्रयिमहर्घविक्रयिणां ताम्रादीनां
सार्गेतिष्ठतांभिक्षान्नप्रतिग्रहेचांद्रायणम् ॥ एतेषांकृतनिष्कृतीनां मुख्यतस्तत्तद्वस्तूपजीविनांचान्नभोजनेदानेयाजनेप्रतिग्रहेचैवम् ॥ एतच्चत
त्तद्वस्तूपार्जितधनत्यागपूर्वकमेव ॥ कुनखिकृष्णदंतकुष्टिप्रभृतीनांचप्रागुक्तानांविप्रान्नदशूद्रस्यशूद्रान्नदविप्रस्यास्वामिकशूद्रस्याप्रसूतायादु
हितुश्चान्नभोजनेशिष्टजुगुप्सितान्नस्य महापापिवीक्षितस्य श्वादिस्पृष्टस्योदक्यादिदृष्टस्य गवाघ्रातस्यपक्ष्यवलीढस्य असंस्कृतस्यबहुधा
चितस्यसरोषसविस्मयदत्तस्यपादस्पृष्टस्यावज्ञातस्यानर्चितदत्तस्यातुष्टिकरस्यचान्नस्यभोजनेचामत्यात्रिरात्रम् ॥ अमत्याभ्यासेकृच्छ्रः ॥
मत्याऽतिकृच्छ्रःमत्याभ्यासेतप्तकृच्छ्रः ॥ ब्रह्मचर्यादेःकायातिकृच्छ्रतप्तकृच्छ्रचांद्रायणानिमत्यादिषुक्रमेणपुनःसंस्कारश्च ॥ यद्वात्रिषवणवद्वा
दशरात्राणिपयसाभूयोभ्यासेचांद्रम् ॥ अत्यंताभ्यासेचांद्रवृद्धिः ॥ आपदिएकाद्वित्रिचतुरुपवासाः ॥ अत्यंतापदित्रिषवणवद्वादशप्राणायामाः
॥ आमान्नेषुस्नानम् ॥ एतद्वृत्तिविप्रान्नभोजनेएकभुक्तम् ॥ अनाचारेदुष्टाचारेनक्तम् ॥ ब्राह्मणब्रुवेस्नानमष्टशतजपश्च ॥ एवंशाखारंडान्नस्य

ब्राह्मणादिसंघाताद्युपदेशत्यक्तादिरूपस्यानेकस्वामिकरूपस्य वा गणान्नस्य कोभुंक्तेत्यादिस्मयादिनादीयमानदुष्टान्नस्यनगरमाधुकरान्न
स्यासन्मानंगुणिनांसन्मानंपापकर्मणांकुरुतेयस्तदन्नस्यचभोजनेप्राग्वदेव ॥ आचारेंदुशेखरे भोजनप्रकरणेगणिकाद्यभोज्यान्नभक्षणेचैवमि
त्युक्तम् ॥ अथजातमृताशौचान्नभोजनेप्रायश्चित्तम् ॥ द्विजाशौचेसवर्णानामुपवासस्त्रिरात्रंवा ॥ विप्रक्षत्रियवैश्यशूद्राशौचेषु अमत्याविप्रो
भुक्त्वानक्तैकद्वित्रिरुपवासान्कुर्यात् ॥ अभ्यासेत्वेकत्रिपंचसप्तोपवासाः ॥ यद्वाभ्यासेद्वात्रिंशत्षष्टिशतप्राणायामाः ॥ उपवासैः प्राणाया
मानांसमुच्चयइत्येके ॥ अन्येत्वापादेअज्ञानतएवासकृद्भोजनएवैतत् ॥ अभ्यासेत्वधिकामित्याहुः ॥ मत्याचेत्कायसांतपनमहासांतपनचां
द्राणि ॥ एकद्वित्रिचतुःकायानिवा ॥ मत्याभ्यासे कायातिकृच्छ्रतप्तकृच्छ्रचांद्राणि ॥ कामतोभूयोभ्यासे एकद्वित्रिषण्मासेषुक्रमेणयावक
व्रतम् ॥ अत्यंतापदिमत्याभ्यासेपिप्रागुक्तप्राणायामाएव ॥ अज्ञानाद्भुक्तौ छर्दनेचानापद्यपिअष्टविंशतिशतपंचशताष्टसहस्रगायत्रीजपोवा
बोध्यः ॥ द्विजाशौचेशूद्रस्यभुक्तौस्नानम् ॥ शूद्राशौचेशूद्रस्यस्नानंपंचगव्यंच ॥ आशौचिविप्रस्पृष्टपानीयपानेपंचगव्यमज्ञानतः ॥ ज्ञान
तश्चेदुपवासः ॥ ब्रह्मचर्यादेस्तत्पानेपंचगव्यमुपवासश्च ॥ प्रत्यहंसहस्रजपश्च त्रिरात्रम् ॥ जाताशौचेआहिताग्न्याशौचेचलघुसर्वंयोज्यामि
त्येके ॥ आशौचेभुक्तवंतंनस्पृशेदापुरीषोत्सर्गात् ॥ इदंचप्रायश्चित्तंतद्वर्णानामाशौचव्यपगमेकार्यम् ॥ तावदाशौचान्नभोजिनोप्याशौचात् ॥
एतच्चाशौचिस्वामिकान्नभोजनएव ॥ आशौचिस्पृष्टाशौचिस्वामिकान्नभोजनेतुतत्तत्प्रायश्चित्तद्वयसमुच्चय इत्यन्यत्रविस्तरः ॥ आशौ
चिगृहेऽन्यदीयान्नभोजनेपिनक्तमुपवासोवाप्रायश्चित्तम् ॥ अथ कापालिकान्नभोजनेतज्जलपानेचक्रमात्कार्यंतदर्धंच ॥ अभ्यासेद्विगुणम् ॥

मत्याभ्यासेचतुर्गुणम् ॥ तत्स्त्रीसंगमनेचैवम् ॥ अत्यंताभ्यासेऽब्दकृच्छ्रम् ॥ अन्नसत्रप्रवृत्तस्याग्निहोत्रिणश्चाशौचवत्त्वेपि तदीयामान्नेषुदोषोन तयोः पक्वान्नग्रहणेतुक्रमेणैकरात्रंयावकव्रतंद्वादशचतुर्विंशतिः प्राणायामावा ॥ पक्षेमासेवादेवपितॄन्भोजयतोऽन्नाशनेचांद्रम् ॥ पतितगृहवासान्नभोजनप्रतिग्रहेषुज्ञानाभ्यासेमासोपवासाः ॥ अज्ञाताभ्यासेचांद्रम् ॥ पूर्वगणितव्यतिरिक्तनिषिद्धाचरणशीलानामन्नभोजनेतूपवासः ॥ वत्सराभ्यासेपराकः ॥ उक्तातिरिक्तनिषिद्धमूलफलपत्राद्यशने उपवासः ॥ इतिनिंदितान्नादनप्रायश्चित्तानि ॥ अथनटादिकर्मकरणे ॥ वशीकरणोच्चाटनादिरूपेभिचारेशक्तौसत्यामपालनरूपे विनाकारणंगृहान्निष्कासनेसंभोगादित्यागरूपेचभार्यात्यागेपिउपपातकसामान्यप्रायश्चित्तानिशक्त्याद्यपेक्षयायोज्यानि ॥ अत्रोपपातकप्रायश्चित्तेपुयथोपदिष्टंविप्रस्यैव ॥ क्षत्रियस्यपादोनम् ॥ वैश्यस्यार्धम् ॥ शूद्रस्यपादम् ॥ तत्स्त्रीणांतदर्धम् ॥ रजस्वलानांतत्रतत्रोक्तमेवकार्यम् ॥ ॥ इत्युपपातकप्रायश्चित्तानि ॥ अथमहापातकेपुतत्रादौब्रह्महत्याप्रायश्चित्तम् ॥ तत्रब्राह्मणत्वप्रकारकज्ञानपूर्वकंमारणकामनयाब्राह्मणवधेमरणादेवशुद्धिः ॥ तच्चात्मनोऽग्निप्रवेशनेनभृगुपतनेनवा ॥ अथवाब्रह्महत्यापापशुद्ध्यर्थंबाणलक्षीभूतोयमितिजानतांधनुर्भृतांयुद्धभूमौस्वेच्छयालक्ष्यभवनेन ॥ अत्रतादृशोबहुप्रहारातोमृतकल्पोभवन्न्यदिपुनर्जीवेत्तदापिशुद्ध्यति ॥ मरणांतंप्रायश्चित्तंक्षत्रियादेरेव विप्रस्यतुतत्तद्वक्ष्यमाणंप्रायश्चित्तंद्विगुणंकार्यमितिमिताक्षरा ॥ अज्ञानतोनिच्छयावाकृतेतुब्रह्मवधेहताविप्रशवाशिरोध्वजहस्तस्तत्कपालालाभे गृहीतान्यदीयकपालः स्वकर्मख्यापयन् ब्रह्मचारिधर्मवान्त्रैवर्णिकाचार्यादिदर्शनेमार्गादपक्रमंस्त्रिषवणस्नायी अध्ययनाध्यापनादिषट्कर्माणिवर्जयन्समंत्रकस्नानसंध्योपासनमात्रंकुर्वन्रात्रौ वीरासनी जटी मुंडी वा वन्यफ

लमात्राहारी तदभावेत्वसंकल्पितविधूममुक्तवज्जनसप्तागारेष्वेवभैक्ष्यं मृत्पात्रेणचरन्क्षमी दांताचारः कंबलक्षौमशाणचीरवल्कलान्यतमवा साबहिर्ग्रामाद्देवालयादिसमीपवासी विप्रगृहाण्यप्रविशन्द्वारादेवतत्तद्गृहान्नमस्कुर्वन्नेककालाशी भिक्षायाअलाभे उपवसन्द्वादशवर्षाणि क्षपयेत् ध्वजश्चशवनिर्हरणार्थखट्वांगस्येव ॥ एतदशक्तौषष्ट्युत्तरत्रिशतधेनवस्तन्मूल्यंवाहेमरौप्यान्यतरस्यषष्ट्युत्तरात्रिशतानिष्काणि ॥ अत्राशक्तौ तावत्संख्यान्यर्धनिष्काणिपादनिष्काणिवा ॥ अत्रांतेशतंदशवागावोदक्षिणाविप्रभोजनादीतिकेचित् ॥ पितृमातृसोदरगुरुश्रोत्रियाहिताग्न्या चार्यादिविप्रवधेतुमरणपर्यंतमेतदेवव्रतम् ॥ भिक्षाशनंचलोहितशरावेणेति ॥ अत्रगोसहस्रादिकद्वादशाब्दमित्यन्ये ॥ द्वादशाब्दव्रत मध्येचोरव्याघ्रादिहन्यमानस्यब्राह्मणस्य तादृशगवांद्वादशकस्यवारक्षणेद्विजान्विज्ञाप्याश्वमेधावभृथस्नानेवा सद्यएवशुद्धिः ॥ प्रक्रांतव्रत मध्येमरणेपितावतैवपापक्षयः ॥ एवंव्रतमध्येगोविप्रार्थप्राणपरित्यागेतत्पर्यंतंव्यापारंकृत्वाजीवनेपिवा सद्य एवशुद्ध्यति ॥ यद्वा व्रतमध्ये कुष्ठादिदीर्घतीव्रव्याधिग्रस्तंविप्रंगांवाऔषधैः संरक्ष्यतदैवशुद्ध्येत् ॥ एवंव्रतमध्येचोराद्यपहृतविप्रधनार्थं तैः सहयुद्धातद्धनस्यविप्रायप्रापणे तन्निमित्तमरणेवाबहुशस्त्रक्षतस्यमृतकल्पस्यतैस्त्यक्तस्यधनानयनंविनापिजीवनेपिवासद्यएवशुद्धिः ॥ नत्वग्रेपुनर्व्रतकरणम् ॥ इदंचा मत्यानिच्छयावा निर्गुणविप्रहंतुर्ज्ञेयम् ॥ प्रक्रांतव्रतक्षत्रियस्यजातिमात्रविप्रस्यचकामतः सगुणेनवधेकृतेद्वादशाब्दंकार्यम् ॥ अज्ञानतः षडब्दम् ॥ मितहविष्याशिनः ॥ शाखांतंत्रिवेदसंहिताब्राह्मणपारायणंवा ॥ पूर्वमेवाहिताग्नेरकृतप्रकृतियज्ञस्याविश्वजिदभिजित्त्रिवृत ग्निष्टुतामन्यतमयागकरणंवा ॥ विंध्योत्तरवासिनातुनिर्गुणेनसगुणेनवाजातिमात्रनिर्गुणविप्रवधेविकर्मवर्जितचातुर्वर्ण्यांत्पाथीभिक्षांकुर्वता

छत्रोपानद्वर्जितेनगोकुलगोष्ठग्रामतपोवनतीर्थादिषु स्वकर्मख्यापयन्समुद्रसेतुदर्शनस्नानेकृत्वा विप्रेभ्योभोजनवस्त्रपवित्रादिदेयम् ॥ अत्रगो
शतंदक्षिणा ॥ जातिमात्रविप्रस्यवेदाभ्यासादिहीनेनधनवतावधेवेदवित्संप्रदानजीवनपर्याप्तभूम्यादिधनदानम् ॥ द्वादशवर्षोपभोग्यद्र
व्यसहितगृहदानंवातावत्सर्वस्वदानंवा ॥ अशक्तौउत्तरोत्तरम् ॥ अत्रप्रतिग्रहेतुवैश्वानरश्चरुः प्रायश्चित्तम् ॥ अज्ञानतः सोमयागदीक्षित
ब्राह्मणवधेचतुर्विंशतिवार्षिकमुक्तव्रतंगोसहस्रद्वयंवा ॥ आचार्यादिवधेप्येवम् ॥ गोसहस्रसहितंद्वादशाब्दमित्यन्ये ॥ अतिगुण
वतागुणहीनस्याज्ञानतोवधेपूर्वोक्तंव्रतंवर्षंकृत्वांतेरत्नहेमगोधान्यतिलदधिघृतदानम् ॥ मत्यादौ द्विगुणादि ॥ ज्ञानतोब्राह्मणज्ञाती
यषंढवधेशूद्रवधव्रतम् ॥ अज्ञानतस्तद्वधेगंगायमुनासंगमेत्रिषवणस्नायी त्रिरात्रोपवासेनशुद्ध्यति ॥ पतितब्राह्मणवधेत्रिवर्षंप्रत्यहं
प्राणायामशतपूर्वकंगायत्रीजपपूर्वकंचवनेभिक्षाशनमंतेषोडशविप्रभोजनंच ॥ अनुपनीतविप्रवधेनिर्गुणविप्रवधोक्तंषडब्दम् ॥ अनुप
नीतत्वेनतस्यनिर्गुणत्वात् ॥ अविज्ञातस्त्रीपुंस्त्वादिकस्य ब्राह्मणगर्भस्यवधेतुद्वादशाब्दम् ॥ विज्ञातस्त्रीत्वादौतत्तत्प्रयुक्तम् ॥
अत्रैकप्रयत्नकृतानेकविप्रवधेप्येकमेवप्रायश्चित्तंतंत्रेण ॥ तंत्रत्वंचसमानदेशकालकर्तृत्वेनागृह्यमाणविशेषत्वम् ॥ अनेकप्रयत्नकृतेतु नानावधे
प्रायश्चित्तावृत्तिस्तृतीयविप्रवधपर्यंतम् ॥ चतुर्थेतुविप्रवधेप्रायश्चित्ताभावः ॥ केचिदामरणमुक्तप्रायश्चित्ताचरणमित्याहुः ॥ बहुभिरेक
विप्रस्यवधेयदीयप्रहारेणमरणंसंप्लाक्षप्रस्रवणादारभ्यपाश्चिमोदधेः प्रतिस्रोतः सरस्वतींगच्छेत् ॥ अन्येषण्मासान्कृच्छ्रांश्चरेयुः ॥ तिर
स्कृतनिर्गुणविप्रस्यक्रोधाद्विषशस्त्रादिनिर्गुणोपरिमरणेत्रैवार्षिकंतद्व्रतम् ॥ निमित्तिनोगुणवत्त्वेत्वब्दं गृहक्षेत्रादिसंबंधेनिर्गुणमरणेसगुण

स्यापित्रैवार्षिकमेव ॥ सगुणस्यतथामरणेतु द्वादशाब्दमेव ॥ यदात्वाक्रोशताडनादिसंबंधमंतरेणभ्रांत्यादिवशात्परमुद्दिश्यविप्रस्या
त्महननेतुहंतुरेवदोषोनोद्दिश्यस्य ॥ तथायत्राक्रुष्टोपिमरणादर्वाग्धनदानादिना तोषितउच्चैःश्रावयतिनाक्रोशकस्यापराधइतिसोप्यदोषः ॥
अथानुग्राहकादीनांतत्रसाक्षादनुग्राहकः ॥ कर्तुर्द्वादशाब्दंचतुर्विंशत्यब्दषडब्दादियत्प्राप्नुयात्तत्पादोनंचरेत् ॥ प्रयोजकोऽर्धम् ॥ अ
नुमंतासार्धपादम् ॥ निमित्तकर्ता पादंचरेत् ॥ अत्रच तिरस्कृतेत्याद्यनुपदोक्ताव्यवस्था ॥ निमित्तकर्तुरुक्तैव ॥ अनुग्राहकप्रयोज
कादीनामपियेनुग्राहकप्रयोजकादयस्तेषामपिप्रायश्चित्तंकल्प्यम् ॥ तथाप्रोत्साहकादीनामपिदंडप्रायश्चित्तेकल्प्ये ॥ प्रोत्साहकःसहाय
श्चतथामार्गानुदेशकः ॥ आश्रयःशस्त्रदाताचभक्तदाताविकर्मणाम् ॥ उपेक्षकःशक्तिमांश्चेद्दोपवक्तानुमोदकः ॥ यएवंम्रियमाणंतुब्राह्म
णंसमुपेक्षते ॥ अकार्यकारिणांत्वेषांप्रायश्चित्तंप्रकल्पयेदिति ॥ कस्मिंश्चिद्ब्रह्मवधेप्रयोजकस्यान्यस्मिन्साक्षात्कर्तृत्वेएकस्यगुरुलघुप्रायश्चित्त
संनिपातस्तत्रद्वादशवार्षिकादिगुर्वंतःपातिनःप्रयोजकादिलघुप्रायश्चित्तस्यप्रसंगादिसिद्धिर्नपृथगनुष्ठानम् ॥ अग्निदगरदशस्त्रपाणिधनापहा
रिक्षेत्रहरदारहारकाः शापोद्यतआथर्वणाद्यभिचारैर्हंताराजगामिपैशुन्यकर्ताचैते वर्तमानतत्तद्व्यापारा आततायिनः एषामग्निविषशस्त्रादिहरण
मात्रेण निवारणसंभवेयदितद्वधःक्रियतेतदातत्तद्वधनिमित्तंप्रायश्चित्तंभवत्येव ॥ अशक्यनिवारणेतुगोविप्रादीनामप्येषांहननादावुद्युतानांव
धेदोषाभावः ॥ क्षत्रियादीनांब्रह्मचारिवनस्थयतीनांचक्रमेणद्विगुणंत्रिगुणंचचतुर्गुणंचप्रायश्चित्तम् ॥ केचित्तु क्षत्रियवैश्यशूद्राणांकामतोप्रवृ
त्तावेतद्विषयेमरणमेवतच्चसर्वस्वदानपूर्वकंमुंडितसर्वांगस्यकरीषाग्नावेव ॥ अकामतस्त्वामरणंमहाव्रताभ्यासइत्याहुः ॥ यत्तु यथोक्तंप्रायश्चित्तं

तत्प्रातिलोम्यानुष्ठितमनुष्यवधचौर्यपारदार्यपारुष्येतिच
विप्रस्यैवक्षत्रियस्यतत्पादोनंवैश्यस्यार्धम् शूद्रस्यपादमितिस्मृत्यंतरेउक्तम् ॥ तत्प्रातिलोम्यानुष्ठितमनुष्यवधचौर्यपारदार्यपारुष्येतिच
तुर्विधसाहसव्यतिरिक्तपापविषयम् ॥ बालवृद्धस्त्रीणामर्धम् ॥ ब्रह्मचारिणोपिषोडशवर्षात्पूर्वंबालत्वादर्धम् ॥ षोडशवर्षादूर्ध्वंतस्यद्विगुणम् ॥
अनुपनीतबालानामनूढानामनूढस्त्रीणांचपादमेव ॥ विप्रात्क्षत्रियायामुत्पन्नोमूर्धावसिक्तस्तस्यक्षत्रियन्यूनमध्यर्धंद्वादशाब्दम् ॥ एवमनुलो
मेषुसर्वत्रन्यूनमूह्यम् ॥ प्रतिलोमोत्पन्नानामनयैवदिशाप्रायश्चित्ताधिक्यमप्यूह्यम् ॥ साग्निकस्याज्ञानान्महापापेतदग्निपुत्रादयआप्रायश्चि
त्तंपालयेयुः ॥ ज्ञानाच्चेदग्नीनप्सुप्रक्षिप्यमरणांतंप्रायश्चित्तम् ॥ आत्मघातेतुतत्पुत्रादयोमृतजातीयवधप्रायश्चित्तंसमुचितंततकृच्छ्रद्वयंचा
ज्ञानंकुर्युः ॥ आत्मघातादिपापिनाशवस्पर्शालंकरणवहनदहनाश्रुपातास्थिसंचयदशाहक्रियादिकमज्ञानतःकृत्वामनूक्तंततकृच्छ्रंवा ॥ अज्ञान
तोमासंभिक्षाहारस्त्रिषवणस्नानंच ॥ स्पर्शाश्रुपातयोस्तुप्रत्येकमेकोपवासः ॥ मत्याभ्यासेकृच्छ्रातिकृच्छ्रचांद्रादियोग्यतयायोज्यम् ॥ आहि
ताग्नेश्चैताहशस्यलौकिकाग्निनादाहोऽमंत्रकः ॥ दाहकर्तुः प्राजापत्यमात्मघातादिप्रायश्चित्तंपुत्रादिःकृत्वाऽस्थीनिविधिवद्दहेत् ॥ अथब्रह्म
हत्यादिव्रतादेशविषयउच्यते ॥ सद्द्विविधः ॥ ताद्रूप्यताप्रतिपादनेन साहश्यप्रातिपादनेनवा ॥ तत्राद्यविषये ब्रह्महव्रतंपादोनम् ॥ द्विती
यविषयेत्वर्धम् ॥ तत्राद्यंयथा ॥ सोमयागस्थे क्षत्रियतत्स्थवैश्ययोरात्रेय्याश्चवधः ॥ रजोदर्शनात्प्रभृतिषोडशदिनांतंवंध्यातिरिक्तास्त्रीआत्रे
यी अत्रिगोत्रोत्पन्नानारीचगर्भिणीच ॥ केचित्तुताहशीवंध्याप्यात्रेयीत्याहुः ॥ आत्रेयीविप्रसंबंधिन्येवविप्रतुल्या ॥ अत्रापिसगुणनिर्गुणादिव्य
वस्था सर्वायोज्या ॥ एवंयागस्थस्त्रीवधः ॥ आहिताग्निद्विजाग्र्यभार्यावधः ॥ विप्रवधफलकानृतसाक्ष्यंविप्रसंबंधिनिक्षेपहरणंच ॥ अत्रन

शेखर.

ववार्षिकब्रह्महव्रतम् ॥ कामादिकृतेद्वैगुण्यादि ॥ नात्रप्राणांतिकत्वम् ॥ क्षत्रियाद्यात्रेयीवधेतुक्षत्रियादिवधोक्तंप्रायश्चित्तम् ॥ द्वितीयंयथा ॥
गुरूणांमुख्यानामाक्षेपोऽनृतपापाभिशंसनंच ॥ वेदानामप्रामाण्याभिधानम् ॥ विप्रातिरिक्तमित्रवधः ॥ अधीतवेदस्यबौद्धादिशास्त्रा
वष्टंभेननाशनम् ॥ प्राणिमात्रवधफलकानृतसाक्ष्यम् ॥ गुणवत्परस्परस्पर्धायांगुणवत्त्वपरीक्षायांवानृतवचनम् ॥ राजकुलेब्राह्मणपीडाजन
कपैशुन्यंचेत्यादि ॥ एतेष्वन्येषुचपूर्वोक्तेषुचब्रह्महत्यासदृशेषुषडब्दंब्रह्महव्रतम् ॥ एषुकपालध्वजधारणादिकंनास्ति ॥ ब्राह्मणादि
हननेकृतनिश्चयेतदर्थं समागत्यसम्यक्शस्त्रादिप्रहारेकृते ॥ कथंचित्प्रतिघातादिप्रतिबंधवशादसौ नमृतस्तथापि प्रहर्तुर्यथावर्णंब्रह्महत्याप्रा
यश्चित्तंभवत्येव ॥ तच्चपादोनमिति मिताक्षरादौ ॥ मनसानिश्चितब्रह्मवधस्यस्वतएवोपरताजिघांसस्य द्वादशरात्रमुदकमात्रभक्षयतोप
वासः ॥ चिकित्सादिना उपकारेक्रियमाणेविप्रादिमरणेतुनाकिमपिपापम् ॥ ॥ इतिब्रह्महत्याप्रायश्चित्तप्रकरणम् ॥ ॥ अथसुरा
पानप्रायश्चित्तानि ॥ ॥ मदजनकोन्नविकारविशेषःसुरा ॥ तस्याविप्रैर्ज्ञानपूर्वंकामतःसकृदपिपानेमरणांतमेव तेषांप्रायश्चित्तम् ॥
तच्चाग्निवर्णसुरांबुगोघृतगोक्षीरस्त्रीगवीमूत्राणामन्यतमपानेन ॥ पानंचलोहपात्रेणताम्रपात्रेणवाऽऽर्द्रवासाःकुर्यात् ॥ तत्पानेनाप्यमरणेतु या
वत्प्राणवियोगंतदनंतरमनशनम् ॥ मरणांतिकचास्मिन्पर्षदुपदेशोनावश्यकः ॥ किंतुस्वपर्यायालोचनेनापि ॥ अकामतोजलबुद्ध्यावा
एकवारंसुरापानेगोकेशमेषादिलोमानिर्मितवस्त्रावृतस्यजटिलस्यद्वादशवार्षिकंब्रह्महव्रतम् ॥ अकामतोभ्यासेतुमरणमेव ॥ उदकबुद्ध्यापी
तायाःसुरायास्तत्कालमेववमनेतुपूर्वोक्तधर्मवतोवर्षत्रयंरात्रौसक्तुतिलकल्कतंडुलकणान्यतरमात्रभक्षणं नत्वन्नभक्षणं प्रत्यहं पंचगव्यपानंच ॥

अथवोभयत्रभूमिदानपूर्वकंपुनःसंस्कारः ॥ अनेनेह व्यवहार्यतैव ॥ द्वादशाब्दासमर्थस्यपापक्षयोपीतिमिताक्षरा ॥ अज्ञानतः
सुरायास्तालुमात्रसंयोगेवार्षिकमिदम् ॥ ज्ञानतोद्विगुणम् ॥ अकामतःसुरासंस्पृष्टस्यशुष्कतद्रसस्यान्नस्यद्रव्यांतरस्यचवाभक्षणेतुपुनः
संस्कारएव ॥ विप्रस्यसुरागंधाघ्राणेसांतपनकृच्छ्रम् ॥ अकामतःकायम् ॥ अत्रक्षत्रियवैश्ययोःपादपादहानिरितिप्राञ्चः ॥ ज्ञानतः
कामपूर्वंसुरापानेतुमरणमेवसर्वेषाम् ॥ गौडीमाध्वीचगौणीसुरा ॥ मुख्यातुपैष्टयेव ॥ तत्रमुख्यायांप्रायश्चित्तमुक्तम् ॥ गौडीमाध्व्यो
स्तुमत्याभ्यासेऽमत्यात्यंताभ्यासेचमाधवीये ॥ मत्यामद्यममत्यावापुनःपीत्वाद्विजोत्तमः ॥ ततोऽग्निवर्णंतत्पीत्वामृतःशुध्येत्सकि
ल्बिषात् ॥ अकामतोगौडीमाध्व्योःसकृत्पानेद्विजानांकृच्छ्रातिकृच्छ्रंचांद्रं चकृत्वापुनःसंस्कारोघृतप्राशनंच ॥ मतिपूर्वकं तयोःसकृ
त्पानेछर्दनेचत्रैवार्षिकंकणभक्षणम् ॥ कामतोद्विस्त्रिरभ्यासेच्छर्दनेचषडब्दम् ॥ उभयत्रछर्दनाभावेप्येवमेवमितिस्मृत्यर्थसारे ॥
अकामतोद्विस्त्रिरभ्यासेतु अब्दकृच्छ्रंपुनःसंस्कारश्च ॥ अमत्यामत्यावाऽधिकाभ्यासेद्वादशाब्दमितिस्मृत्यर्थसारे ॥ तेनपूर्वोक्तमाधवी
यंमरणांतिकंद्वादशाधिकाभ्यासेनिरंतरंबहुकालाभ्यासेवायोज्यम् ॥ ॥ अथ मद्यपाने प्रायश्चित्तम् ॥ ॥ पनसादिजन्यंमदकारणंद्रव-
द्रव्यंमद्यमितिमाधवः ॥ तच्चैकादशधा ॥ पानसंद्राक्षंमधुकंखार्जूरंतालमैक्षवंमधूत्थंसैरमारिष्टंमैरेयंनालिकेरजमितिभेदात् ॥ एतत्पा
नेक्षत्रियादेर्नदोषः ॥ विप्रस्यामत्यासकृत्पानेतप्तकृच्छ्रपूर्वकंपुनःसंस्कारः ॥ ज्ञानतःकामतश्चसकृत्पानेकृच्छ्रातिकृच्छ्रंसमुद्रगायांनद्यांचां
द्रंवाकृत्वापुनरुपनयनंघृतप्राशनंच ॥ मुखमात्रप्रवेशेतुपद्मात्रपद्मोदुंबरबिल्वपलाशकशोदकपानम् ॥ गौडीमाध्व्योस्तु मुखमात्रप्रवेशे

द्विगुणम् ॥ कामतस्त्विदमेवद्विगुणम् ॥ आभ्यासेतुतत्तकृच्छ्रादेश्चांद्रादेश्चावृत्तिः ॥ अत्यंताभ्यासेमरणमेव ॥ अज्ञानतोऽत्यंताभ्यासे
द्वादशवार्षिकम् ॥ प्रांचस्तुविप्रस्यकामतःसकृदपितालादिमद्यपानेमरणांतमवेत्याहुः ॥ अनन्यौषधसाध्यव्याध्युपशमनार्थं सुरापानेत्व
ज्ञानकृतेत्रैमासिकमब्दपादंचांद्रायणंवाकृत्वापुनरुपनयनम् ॥ मद्यपानेतुतथाकृतेतत्तकृच्छ्रसहितःपुनःसंस्कारः ॥ ज्ञानकृतेतुतत्तकृच्छ्र
पराकश्चांद्राणि मद्येतत्तकृच्छ्रद्वयम् ॥ पुनःसंस्कारउभयत्रसुरादेःपानविषयेप्रायश्चित्तंतत्पित्रादीभिःकार्यम् ॥ अस्यानुपनीतस्यसुरापाने
तुत्रैवार्षिकंपित्रादिभिःकार्यम् ॥ अनूढायाएतदर्धम् ॥ कामकारेपिनानयोर्मरणांतिकम् ॥ किंतुद्विगुणम् ॥ तेनषड्वार्षिकमुपनीत
स्यषोडशवर्षपर्यंतंषडब्दम् ॥ केचिद्द्वादशवर्षपर्यंतंपादमेव ॥ तदूर्ध्वमर्धमित्याहुः ॥ एवंवृद्धातुरस्त्रीणामप्यर्धम् ॥ एवंरोगनाशार्थंपानेऽ
पिबालादीनांयथायोग्यंकल्प्यम् ॥ ॥ अथसुरापानसमानिपापानि ॥ वेदनिंदाव्यसनासक्त्याधीतवेदविस्मरणंकूटसाक्ष्यंविप्रव्यतिरिक्त
मित्रवधः मत्यात्यंताभ्यासेनगर्हितपलांड्वादिभक्षणं रजस्वलामुखचुंबनं वाङ्मनःकायकर्मणामनार्जवरूपं जैह्ममात्मोत्कर्षार्थंराजकुलादौचतुर्वे
दोऽहमित्याद्यनृतभाषणमेतानिसुरापानसमानानि ॥ अत्रब्रह्मवधसमानानामपिकेषांचिद्ग्रहणंप्रायश्चित्तविकल्पार्थम् ॥ एतेषुसुरापानसमेषु
अर्धंप्रायश्चित्तम् ॥ ॥ इतिसुरापानादिप्रायश्चित्तानि ॥ ॥ अथस्वर्णस्तेयप्रायश्चित्तम् ॥ विप्रस्वामिकाशीतिगुंजापरिमितसुवर्णापहरणंमहा
पातकम् ॥ इतोन्यूनहरणंनमहापातकम् ॥ अपहरणंचसमक्षंपरोक्षंवाबलाच्चौर्येणवाक्रयादिस्वत्वहेतुविनाग्रहणमुच्यते ॥ ज्ञानतस्तुत
त्कर्तालोहमयंमुसलमादायप्रकीर्णकेशःस्वदोषंस्वर्णापहाराख्यंख्यापयन् अनेनमुसलेन मांप्रहरेदितिवदन्राज्ञे मुसलमर्पयेत् ॥ तेनसकृ

देवाभिहतोमृतःशुद्धः ॥ यदिदृढप्रहारार्तोपिजीवेत्तदापिशुद्ध्यात्ति ॥ नब्राह्मणंहन्यादित्यादिनिषेधस्तुरागप्राप्तविप्रवधविषयः ॥ अहनने
राज्ञःपापश्रवणात् ॥ माधवस्तु एकस्यतस्यमरणेबहूनांतदीयमित्रकलत्रादीनामनाथतयामरणंसंभाव्ययदिराजादयधनदंडादिपुरःसरंमुंच
तितदापिशुद्धइत्याह ॥ यदिराजादृढंहन्तुमसमर्थस्तदाताम्रमयमायुधंतस्मैदद्यात्तेनात्मानंघातयेत् ॥ मरणात्पूतोभवति ॥ यत्नपूर्वंकामतो
हरणेमुंडितकेशोघृताक्तःस्वकर्मख्यापयन्गोमयाग्निनापादप्रभृत्यात्मानंदाहयेत् ॥ एतच्चापहृतसुवर्णादेकादशगुणंस्वर्णंतत्स्वामिनेदत्त्वैवका
र्यम् ॥ गुरुश्रोत्रिययागस्थविप्रसुवर्णहरणेकारीषाग्निदाहएव ॥ क्षत्रियादीनामपहर्तृत्वेसर्वथाकारीषदाहएव ॥ स्मृत्यर्थसारेतुसुवर्णस्तेयीवि
प्रोव्रतमेवाचरेत् ॥ नदंडेनात्मानंघातयेन्नचराजाविप्रंहन्यादित्युक्तम् ॥ अकामतोरजतादिबुद्ध्यापहारेणसुरापोक्तंद्वादशवार्षिकम् ॥
कामतोरजतादिबुद्ध्यापहारेप्येतदेव ॥ शूलपाणिस्तुकामतोरजतादिबुद्ध्यापहारेएवंद्वादशाब्दम् ॥ अकामतस्तुतद्बुद्ध्याऽपहारेतुषड्वा
र्षिकमित्याह ॥ द्वादशवार्षिकविषयेऽपहर्तुर्महाधनिकत्वेआत्मतुलितहेमदानम् ॥ निर्गुणस्वामिकहरणेसगुणस्यनववार्षिकम् ॥ कश्चि
त्पादोनसुवर्णहरणेप्येतदेवाह ॥ यदाक्षुत्क्षामकुटुंबभरणार्थं सगुणोपिविप्रोनिर्गुणस्वामिकमपहरतितदाषडब्दंतीर्थयात्रासहितंषड्वार्षिक
मितिमाधवः ॥ कश्चिदर्धसुवर्णहरणेप्येतदेवाह ॥ ब्राह्मणान्यस्वामिकसुवर्णहरणंनमहापातकम् ॥ किंतूपपातकमितिमिताक्षरा ॥
यदात्वपहारानंतरमेवानुतप्यत्यजातिप्रत्यर्पयतिवातदाचतुर्थकालमिताशनास्त्रिवर्षमवस्थानं क्षत्रियादिसुवर्णापहारेप्येतदेवेतिकेचित् ॥
क्षत्रियादिस्वामिकंहरणमुपपातकमित्यपरे ॥ रजतताम्रादिसंसृष्टसुवर्णापहारेपि द्वादशाब्दमेव ॥ यस्तुताम्रादिकस्यरसवेधाद्यापादित

स्वर्णत्वस्यापहारः स उपपातकमेव ॥ मनसापहारं संकल्प्यप्रवृत्तस्यस्वतएवउपरतस्यद्वादशरात्रंवायुभक्षणंमनसिपापध्यानमात्रेणप्रणव
व्याहृतिजपपूर्वकंत्रिरात्रंप्राणायामाः ॥ वाचाभिलाषेप्राजापत्यम् ॥ स्त्रीबालादिष्वधोदिव्यवस्थाप्राग्वत् ॥ क्षत्रियादेरपहर्तृत्वे क्रमेण
द्विगुणंत्रिगुणंचतुर्गुणंज्ञानतस्तुमरणमेवेतिशूलपाणिः ॥ क्षत्रियादेः पादपादहानिरेव ॥ द्वैगुण्यादिकंतु प्रकरणाद्विप्रवधविषयमितिभ
वदेवः ॥ वालाग्रमात्रसुवर्णापहारे एकः प्राणायामः ॥ लिक्षामितापहारेतत्त्रयम् ॥ राजसर्षपतुल्ये तच्चतुष्टयमष्टोत्तरशतगायत्रीजपश्च।
गौरसर्षपतुल्येअष्टसहस्रगायत्रीजपः ॥ यवमितसुवर्णस्तेयेदिनद्वयंतज्जपः ॥ कृष्णलस्वर्णस्तेयेसांतपनकृच्छ्रम् ॥ माषस्वर्णापहारेमा
सत्रयंगोमूत्रयावकपानम् ॥ पंचगुंजात्माकोमाषस्तेसुवर्णस्तुषोडश ॥ माषाधिकसुवर्णमानन्यूनहेमापहारे वत्सरं यावकव्रतम् ॥ सुव
र्णपरिमाणतो न्यूनस्यापिबलादपहरणेमरणांतमेव ॥ सुवर्णमानन्यूनरजतस्तेयेसांतपनंततऊर्ध्वंदशनिष्कपर्यंतंचांद्रम् ॥ ततआशत
निष्कंचांद्रद्वयम् ॥ ततआसहस्रात्त्रिगुणम् ॥ सहस्रनिष्काधिकरजतस्तेयेस्वर्णस्तेयेसमत्वान्नवाब्दं ब्रह्महव्रतम् ॥ ताम्रकांस्यपित्तला
दीनांसहस्रनिष्कमितस्तेयेपराकम् ॥ निष्कसहस्ररजतमूल्यानामेषांस्तेयेद्वादशाब्दम् ॥ एवंदशनिष्कमूल्यरत्नहरणेचांद्रम् ॥ आश
तंतद्द्वयम् ॥ आसहस्रंतत्त्रयम् ॥ सहस्रनिष्काधिकमूल्यरत्नहरणेब्रह्मवधसमत्वान्नवाब्दम् ॥ सहस्राधिकविप्रमूल्यविप्रस्वामिकाश्वमनु
ष्यभूमिगोव्रजानांसुवर्णभिन्ननिक्षेपस्यच हरणमित्येतानि सुवर्णस्तेयसमानानि ॥ एतेषु षडब्दं सहस्राधिकमूल्यविप्रस्वामिकवस्तुमात्रहरणं
सुवर्णस्तेयसममित्यपरे ॥ युगपदनेकसुवर्णमितहेमापहारेप्येकमेव प्रायश्चित्तम् ॥ नप्रायश्चित्तावृत्तिर्हरणक्रियायाएकत्वात् ॥ कालभेदे

प्रयत्नभेदंचतदावृत्तिः ॥ ॥ इतिसुवर्णस्तेयप्रायश्चित्तानि ॥ ॥ अथगुरुतल्पेप्रायश्चितम् ॥ ॥ गुरुरत्रापितातल्पस्तत्पत्नीगमनंचात्ररेतः
सेकपर्यंतंचेन्महापातकम् ॥ ततोऽर्वाङ्निवृत्तौत्वनुपातकम् ॥ तत्राज्ञानादकामतोपिजनन्यामुत्तमवर्णायांतत्सपत्न्यांचप्रवृत्तस्यअसवर्णायांत
त्सपत्न्यांतुज्ञानतःकामतश्चप्रवृत्तस्यमरणांतमेव ॥ तच्चोभयेच्छयाप्रवृत्तौगुर्वंगनागमनंमयाकृतमितिस्वकर्मख्यापयतामुंडितसर्वशरीरकेशन
खेनघृताक्तेनाग्निवर्णकृतेकाष्ठशयनेतद्वर्णकृतयैवलोहमय्यास्त्रीप्रतिमयासहशयनेनतामालिंग्य कार्यम् ॥ स्वेनप्रोत्साहनेतु क्षुरेणवृषणौसलिं
गौस्वयंछित्त्वांजलिनागृहीत्वानैर्ऋत्यांदिशिपृष्ठतोनिरीक्षणमकुर्वन्नकुटिलगतिरग्रतःस्थितमविचारयन्प्राणांतंगच्छेत् ॥ एवंगच्छन्यत्रैव
कुड्यादिनाप्रतिबुध्यतेतत्रैवमरणांतंतिष्ठेत् तथाप्रोत्साहितस्य तप्तलोहशयनमात्रम् ॥ जनन्यामुत्तमवर्णायांतत्सपत्न्यांचाज्ञानादकामतः
प्रवृत्तावेतदन्यतममेवेत्यन्ये ॥ कामकृतेसर्वत्रप्रागुक्तमरणांतंकारीपादिदाहोवा ॥ अकामतोऽभ्यासेप्येवम् ॥ इदंमुख्यपुत्रस्यैव ॥ नतु
दत्तकादीनाम् ॥ दत्तकस्यन्यूनंकल्प्यमितिमयूखे ॥ सवर्णायांमातृसपत्न्यामकामादज्ञानतश्चप्रवृत्तौद्वादशाब्दम् ॥ अस्यांकामतःप्रवृ
त्तस्यरेतःसेकात्प्राङ्निवृत्तौद्वादशवार्षिकम् ॥ जनन्यामुत्तमवर्णतत्सपत्न्यांचअकामतःप्रवृत्तस्यरेतःसेकात्पूर्वंवृत्तौद्वादशवार्षिकम् ॥ एषु
त्रिषुअकामतोर्धम् ॥ विप्रपुत्रस्यक्षत्रियांपितृभार्यांगच्छतोनववार्षिकम् ॥ वैश्यांपड्वार्षिकम् ॥ शूद्रायांत्रैवार्षिकम् ॥ अभ्यासे तिसृष्व
पिद्वादशाब्दम् ॥ अत्यंताभ्यासेमरणांतमेव, गुरुपत्नीसाम्यात् ॥ मातुःसपत्नींसवर्णांव्यभिचारिणीमज्ञानतोगच्छतोवेदजपसहितचांद्रा
यणत्रयम् ॥ ज्ञानतःसंवत्सरंब्रह्महव्रतम् ॥ एवंलघुप्रायश्चित्तानिव्यभिचार्यनुत्तमवर्णसवर्णविषयेषु व्यवस्थयायोज्यानि ॥ गर्भोत्पत्तौतवे

तान्येवद्विगुणानि ॥ मरणातिरिक्तविषयेगमनावृत्तौप्रायश्चित्तावृत्तिर्यत्रद्विगुणोक्तिस्तत्रद्वैगुण्यावृत्तिश्च ॥ सर्वत्र रेतःसेकात्प्राङ्निवृत्तौ मरणां
तविषयेद्वादशाब्दम् ॥ अन्यविषयेरेतःसेकाभावेतदर्धम् ॥ गुरूपभुक्तास्वपिसाधारणस्त्रीषुगमनेगुरुतल्पदोषोन ॥ किंतुपूर्वोक्तंतत्प्रायश्चित्तं
द्विगुणम् ॥ स्त्रीणामपिपुत्रादिष्वेषुमत्याप्रवृत्तौमरणांतमेव ॥ अमत्याप्रवृत्तौद्वादशाब्दिकंपुरुषोक्तवत्कार्यम् ॥ अन्येतुस्त्रीणामपिकामतः प्रवृ
त्तौसर्वत्रपुरुषोक्तार्धकृत्स्यायोज्यमित्याहुः ॥ अथातिदेशिकप्रायश्चित्तानि ॥ पितृष्वसामातृष्वसाश्वश्रूपितृव्यभ्रातृमातुलाचार्यमित्रशिष्या
णां भार्याः सुताश्चसापत्नभगिनीआत्मसखीपितृमातृसखी भगिन्याः सखी भगिनीस्नुषादुहिताशरणागताराज्ञीप्रव्रजितापतिव्रताधात्रीचैतासु
गमनंगुरुतल्परूपम् ॥ पितृव्यभ्रात्रोरुपनीत्रोरेवभार्ययोरेतात्पितृव्यभार्यादयः स्वस्रादयःश्चसमानवर्णाएव ॥ आस्वकामतोद्वित्रिपर्यंताभ्यासे
कामतः सकृद्गमनेचनववार्षिकम् ॥ कामतोद्वित्रिवारंगमनेनववार्षिकावृत्तिः ॥ अकामतः सकृद्गमनेषड्वार्षिकंकामतस्त्र्यधिकाभ्यासेकामतश्चै
करात्रादूर्ध्वमत्यंताभ्यासेचमरणमेव ॥ कुमारीभागिनेयी स्वगोत्रापितृष्वसृमातृष्वस्रोः कन्यामातामहपितामहयोर्भार्याश्रोत्रियर्त्विगुपाध्याय
भार्यागुणवद्रजस्वलानिक्षितापौत्रीदौहित्रीअंत्यजाम्लेच्छीपुल्कसीचेत्येवमादिषुगमनंगुरुतल्पसमानम् ॥ अत्यंजाश्चात्र ॥ चांडालः श्वपचः
क्षत्तासूतोवैदेहकस्तथा ॥ मागधायोगवाश्चेतिसप्तैव ॥ नतुरजकश्चर्मकारश्चेत्यादिप्रतिपादिताः ॥ तेषुलघुप्रायश्चित्तस्योक्तत्वात् ॥
आसु एकरात्रादूर्ध्वमभ्यासेषड्वार्षिकम् ॥ एकरात्राभ्यासेत्रैवार्षिकम् ॥ उभयत्रकामतोद्विगुणम् ॥ कामतोऽत्यंताभ्यासेमरणमेव ॥
आसुज्ञानतः सकृद्गमनेत्रै वार्षिकम् ॥ अंत्यजादिषुज्ञानतः सकृद्गमनेवार्षिकंकृच्छ्रम् ॥ अज्ञानेऽर्धम् ॥ चांद्रायणद्वयमित्यन्ये ॥

गुरुतल्परूपेषुतत्समेषुचरेतःसेकात्प्राङ्निवृत्तौचांद्रायणम् ॥ अकामतस्त्वत्रतप्तकृच्छ्रम् ॥ यदापुनरेताएवात्यंतव्यभिचारिणीर्गच्छतितदा
ऽप्यकामतस्तप्तकृच्छ्रंपराकोवा ॥ कामतस्तुचांद्रम् ॥ अभ्यासेआवृत्त्यादि ॥ ॥ इतिगुरुतल्परूपतत्समप्रायश्चित्तानि ॥
यानिमहापातकसमानितान्येवानुपातकानि तेषुचप्रायश्चित्तानिब्रह्महत्यादिमहापापप्रघट्टेषुचतुर्षूक्तान्येव ॥ अथगौडादिमते मातृगमनं साप
त्नमातृगमनंदुहितृस्वसृस्नुषागमनंचेतिपंचातिपातकानीतियावत्युक्तानितत्राद्ययोर्व्यवस्थयाप्रायश्चित्तानि उक्तान्येव ॥ दुहितृगमनादिषुत्रि
षुसकृद्गमनेनवाब्दद्वादशाब्दादि द्वित्र्याद्यभ्यासेऽग्निप्रवेशादिनामरणमिति ॥ अत्रमाधवः ॥ मातरिस्वसुताभगिन्योश्चाक्रियानिवृत्तौमरणांतम् ॥
तच्चमातरिसकृत्त्वेऽन्ययोरसकृत्त्वे ॥ संकल्पाध्यवसाययोश्चांद्रत्रयम् ॥ शेषपंचविधापराधविषयेप्राजापत्यद्वयमित्यष्टविधमैथुनप्रकारभेदे
नव्यवस्थामुक्तवान् ॥ ॥ इतिमहापातकानुपातकातिपातकप्रायश्चित्तानि ॥ ॥ अथसंसर्गाख्यमहापापेप्रायश्चित्तम् ॥ ॥ संसर्गश्च
एकभांडपचनतदीयान्नभोजनैकपात्रसहभोजनेष्टिसोमादिश्रौतयागयाजनाध्ययनाध्यापनविवाहैः संभाषणगात्रसंमर्दतन्मुखवायुसंसर्गैकया
नारोहणैकासनास्थित्यैकखट्वादिशयनैकपंक्तिभोजनैश्च ॥ तत्रविवाहोनामतस्मैकन्यादानंतस्माच्चकन्याग्रहणम् ॥ अत्रविवाहांतरैरेकैकैरप्य
नुष्ठितैः सद्यः पातित्यमितिशंखः ॥ एतैः प्रत्येकैरपिसंवत्सराभ्यस्तैरेवपातित्यमितिमनुः ॥ तत्रविवाहस्यसंवत्सराभ्यासस्तत्संबंधिनिमि
त्तकभोजनाद्यभ्यासरूपः संभाषणादिसप्तभिस्तुसमुदितैः संवत्सरपर्यंतंनिरंतराभ्यस्तैरेव पातित्यम् ॥ प्रत्येकंतेषांतथाभ्यासेपिनपातित्यम् ॥
तथाचचतुर्विधमहापातकिष्वन्यतमेनोक्तविधसंसर्गस्यपातित्यहेतोर्ज्ञानतः करणे द्वादशाब्दम् ॥ अकामतोऽर्धमज्ञानतश्च ॥ एवंचपतितेनस

मेयस्यवर्षेनिरंतरमज्ञानतःसंसर्गःसपातकीव्रतार्धंकुर्यात् ॥ ज्ञानतस्तुतदायंसंपूर्णमेव ॥ मरणस्थानऽस्यद्वादशाब्दमेव ॥ प्राचस्तु अज्ञानतः संसर्गेपादन्यूनंतत् ॥ ज्ञानतःसंपूर्णम् ॥ मरणस्थानेचतुर्विंशतिवार्षिकामित्याहुः ॥ संभाषणादित्रयरहितेयानादिचतुष्टयेसंवत्सराभ्यस्तेऽपि पंचमभागोनंप्रागुक्तम् ॥ तत्सहितेतुपूर्णंद्वादशाब्दादि ॥ अथांतरितादिगणनादिनापंचरात्रमज्ञानतःसंसर्गेउपवाससहितपादकृच्छ्रम् ॥ दशाहेकायम् ॥ द्वादशाहसंसर्गेसांतपनम् ॥ पक्षेदशोपवासः ॥ मासंचेत्पराकः ॥ मासत्रयंचेच्चांद्रम् ॥ षण्मासिकेचांद्रद्वयम् ॥ किंचिन्न्यूनेऽब्दे षण्मासकृच्छ्रम् ॥ कामतःसंसर्गेतुपंचाहेकृच्छ्रम् ॥ दशाहेतप्तकृच्छ्रम् ॥ पक्षेपराकः ॥ मासेचांद्रम् ॥ मासत्रयेकृच्छ्रंचांद्रम् ॥ षण्मासिकेऽर्धाब्दकृच्छ्रम् ॥ किंचिन्न्यूनेऽब्देअब्दंचांद्रायणम् ॥ कामतोत्यंतापादिषण्मासम् ॥ पंचमहायज्ञादिस्मार्तेयाजनेज्ञाध्यापनेदुहितृभागिनीव्यतिरिक्तेचयोनिसंबंधेषडब्दम् ॥ अकामतोऽर्धम् ॥ एवमतिपातकिसंसर्गिणांकामतोनववार्षिकम ॥ अकामतोऽर्धम् ॥ अनुपातकिसंसर्गिणांषड्वार्षिकम् ॥ अकामतोऽर्धम् ॥ तथोपपातक्यादिसंसर्गिणांमुख्यपातकितुल्यंत्रैवार्षिकंत्रैमासादिकम् ॥ अकामतोऽर्धमित्याद्यूहनीयम् ॥ मयूखेत्वितरपापिसंसर्गेतत्तद्व्रतंपादोनंकार्यमित्युक्तम् ॥ सर्वत्रसंसर्गेबालस्त्रीवृद्धातुराणामर्धम् ॥ अकामतःपादः ॥ अनुपनीतबालस्यकामतोपिपादएव ॥ अकामतोऽर्धपादः ॥ माधवस्तुसंसर्गिदोषः ॥ कलौपातित्यापादकोन किंतुपापमात्रापादकः ॥ संसर्गदोषःपापेष्वितिकलिवर्ज्येषुगणनादित्याह ॥ वस्तुतस्तु । न्यसेदेशंकृतयुगेत्रेतायांग्राममुत्सृजेत् ॥ द्वापरेकुलमेकंतु कर्तारंतुकलौयुगे ॥ इतिपराशरस्मरणात्कृतयुगादौदोषजनकत्वेनोक्तदेशादिसंसर्गस्यैवकलिवर्ज्येषुगणनंयुक्तम् ॥ अयंचापरःकलौविशेषः ॥

यत्कृतंसंभाषणमात्रादेवपातित्यंत्रेतायांस्पर्शमात्राद्वापरेतत्स्वामिकान्नमात्रग्रहणात् ॥ तत्कलौ स्नेहेनसमुदितेनैवसंभाषणादिकर्मणा नत्वे
केनेतिदिक् ॥ संसर्गिसंसर्गिणांपादपादहानिः ॥ तथाचमुख्यमहापापिनांसंसर्गवतोद्वादशाब्दम् ॥ तत्संसर्गिणोमुख्यात्तृतीयस्यनवाब्दम् ॥
तृतीयेनसंसर्गवतोमुख्याच्चतुर्थस्यषडब्दम् ॥ पंचमस्यत्रैवार्षिकम् ॥ मुख्यसंसर्गिणोद्वितीयस्यैवपातित्याच्छ्रौतस्मार्तकर्महानिः ॥
तृतीयादेःप्रायश्चित्तमात्रं नतुवैदिककर्महानिरितिमिताक्षरा ॥ प्रांचस्तुपादहानिक्रमेणतृतीयेनसंसर्गिव्रतार्धमात्रंकार्यम् ॥ चतुर्थस्यतुमु
ख्यात्पंचमस्यनकिंचिदित्याहुः ॥ ॥ इतिसंसर्गिप्रायश्चित्तम् ॥ ॥ पतितोत्पन्नानातुयस्यपतितस्ययदुक्तंतत्तृतीयांशःपुंसाम् ॥ कन्या
नांतुनवमांशः ॥ पतितोत्पन्नांकन्यांतदीयधनरहितांविवस्त्रांकृतपूर्वोक्तपतितनवमांशप्रायश्चित्तामहोरात्रोपोषितांस्वकीयशुक्लवाससाच्छा
दितां नाहमेतेषांनैतेममेतित्रिरुच्चैर्वदंतींदेवालयादौस्वगृहेवाविवाहयेत् ॥ अथपतितामहापातकिनोनुपातकिनस्तत्संसर्गिणश्च ॥ तथाना
स्तिकःप्रमादान्नास्तिक्याद्वाचिरंश्रौतस्मार्तकर्मत्यागीपतितः ॥ पुत्राद्यत्यागीमहापापेषु ॥ अनुपातकेषुतत्कर्तॄणांप्रयोजकः ॥ गोघ्नादयोमां
सभक्षकादयश्च ॥ एतेचाकृतप्रायश्चित्तानसंव्यवहार्याः ॥ मातुस्तुतादृश्याअपिनतथा ॥ किंतुसेवापोषणंकार्यम् ॥ पृथक्पितुरपिम
हापातकिनएवत्यागः ॥ प्रकारांतरेणपतितस्यनत्यागः ॥ किंचपितुर्दोषंस्वयंज्ञात्वापिप्रथमतःपरेभ्योनकथयेत् ॥ तत्कालेस्वयंतेन
संव्यवहरेत् ॥ यत्यादेःस्त्रीसंगेषुपुनर्गार्हस्थ्यकरणेप्रायश्चित्ताभावएव ॥ आरूढोनैष्ठिकंधर्मंयस्तुप्रच्यवतेपुनः ॥ प्रायश्चित्तंनपश्यामियेन
शुद्ध्येत्सआत्महा ॥ इतिवचनात् ॥ उपपातकात्प्रायश्चित्तंभवत्येवेत्यन्ये ॥ सर्वथात्वव्यवहार्यताबहिस्तूभयथास्मृतेराचाराच्चेतिव्याससूत्रात् ॥

नैष्ठिकानांवनस्थानांयतीनांचावकीर्णिनाम् ॥ शुद्धानामपिलोकेऽस्मिन्प्रत्यापत्तिर्नविद्यते इतिवचनाच्च ॥ एवंस्त्रीबालशरणागतहंतारः कृतघ्नाश्चकृतप्रायश्चित्ताअपिनसंव्यवहार्याः ॥ अतोव्यभिचारिण्यावधेप्रायश्चित्तालपत्वोपिवचनाद्व्यवहार्यत्वाभावइति मिताक्षरा ॥ स्त्रीणां महापापातिपापानुपापानि अभ्यस्तोपपातकानिच पातित्यनिमित्तानि ॥ विशेषतोहीनवर्णगमनंस्वगर्भपातनंभर्तृहिंसनंचशिष्यगुरुजुंगितोपगमनानिचेत्येतानि ॥ महापापेषुकृतप्रायश्चित्तेष्वागतेषुसपिंडास्तेनसहपुण्यजलेस्नात्वाऽपांपूर्णंकुंभंपुण्यदेशेकालेपुण्यदिङ्मुखानयेयुः ॥ ततःसगोभ्योयवसंदत्त्वागोभिर्भक्षितेतृणेशुद्धःसंव्यवहार्यश्च ॥ स्त्रीणामपिपतितानामेवमेवपरिग्रहः ॥ इदंघटस्फोटोत्तरंकृतप्रायश्चित्तस्यपरिग्रहविषयमित्यन्ये ॥ वाचस्पतिमिश्रास्तु मत्यामहापातकिनोऽतिपातकिनश्चप्रायश्चित्तेकृतेपिनव्यवहार्याः ॥ प्रायश्चित्तंतु तेषांपरलोकशुद्ध्यर्थमेवेत्याहुः ॥ यस्तु नरोनारीवोद्धत्यात्पातित्येपिप्रायश्चित्तंनेच्छतितंसर्वेसापिंडाबांधवाश्चराजादिसमक्षमाहूयतत्पापंव्यक्तंकृत्वासुहृदुपदिशेयुः प्रायश्चित्तंकुर्वाचारं लभस्वेति सयदिएवमपिनांगीकरोतितदारिक्तादिनिंद्यतिथौसायाह्नेग्रामाद्बहिःसंभूयकुत्सितजलादिसंपूर्णाः प्राचीनावीतिनोदक्षिणामुखागुरुसन्निधौ अस्माकंत्वंमृतइतिवामुमनुदकंकरोमीतिवावदंतो दर्भेषुच्छिन्नाग्रेषुन्युब्जंकुर्युः ॥ ततःसर्वेनिरीक्ष्यमाणाअपउपस्पृश्यग्रामंप्रविशेयुः ॥ सपिंडानामेकाहमाशौचम् ॥ ततोऽधिकारीकर्तादाहवर्जंजीवंतमेवोद्दिश्यपिंडोदकदानादिप्रेतकर्माणि सापिंड्याःप्राक्तनानिकुर्यात् ॥ उदकपिंडादिप्रेतक्रियोत्तरंपात्राननयनमितिमिताक्षरायांस्पष्टम् ॥ ततःसर्वकर्मबहिष्कृतेनतेनसंभाषणादिकं वर्जयेत् ॥ प्रमादात्संभाषणेसावित्रींजपन्नेकरात्रंतिष्ठेत् ॥ मत्यात्रिरात्रम् ॥ अब्दपर्यंताभ्यासेपातित्यम् ॥ स्त्रीणामपिताहृशीनांगृहसमीपे

पर्णकुट्यादौवासंदत्त्वाजुगुप्सितमन्नंप्राणधारणमात्रसमर्थंजीर्णंमलिनवस्त्रंचदद्यात् ॥ घटस्फोटोत्तरं शिष्यगागुरुगापतिघ्नीनांचसर्वथैवत्यागः ॥
घटस्फोटप्रयोजनमन्यत्रद्रष्टव्यम् ॥ एकस्मिन्निमित्तेगुरुलघुभूतानेकविरुद्धप्रायश्चित्तादिप्राप्तौदेशकालवयआदिकमवेक्ष्यपरिषदाव्यवस्थाक
ल्प्या ॥ यथाजलवासोहिमदेशेशिशिरकालेचनोपदेष्टव्यः ॥ उपवासादिकंबालवृद्धयोर्न ॥ एवंशक्तिरवेक्ष्या ॥ अन्यथायुवापित्तप्रकृतिर्निरंत
रोपवासाननुतिष्ठन्व्यापद्येतेत्यादिकमूह्यम् ॥ अनुक्तप्रायश्चित्तेषुजपतपोहोमोपवासदानानिदेशकालशक्तिपापलाघवगुरुत्वादिकमपेक्ष्यक
ल्प्यानि ॥ तत्रजपोगायत्र्यादेःहोमःतिलानांव्याहृतिभिर्गायत्र्यावा ॥ ततःपयोभक्षताशाकाहारताफलाशनंप्रसृतियावकताहिरण्योदकप्राशनंब्र
ह्मचर्यंतीर्थोदकस्नानमार्द्रवस्त्रताऽनशनमितितपांसि ॥ दानंहिरण्यगोवस्त्राश्वतिलभूमिघृतानां संवत्सरंषण्मासाश्चत्वारस्त्रयोद्वावेकश्चतुर्विंश
तिरहानिद्वादशाहःषडहस्त्र्यहोऽहोरात्रइतिकालः ॥ पापस्यगुरुलघुत्वेत्वर्थवादेनदंडेनवाज्ञानकृतत्वादिभिर्वाबोध्ये ॥ एवंपापिनांप्रायश्चित्ता
करणेतामिस्रलोहशृंखलारौरवमहारौरवसंघातकालसूत्रकप्रतापनासिपत्रवधतामिस्रप्रभृतिनरकेषु नानाविधेषु प्रथमं वासोनंतरंपुनरस्मिन्सं
सारेश्वसूकरादिकुयोनिजन्मानि ॥ ततःकदाचिन्मानुषयोनौजातस्यापिकुरोगित्वम् ॥ रोगाश्चारंभेएवदर्शिताः ॥ एवंचनरकोपभोगक्षीणदोषा
णामपितद्रोगानुमितावशेषाणांप्रायश्चित्तंकार्यम् ॥ अकृतप्रायश्चित्तानांकुष्ठादिरोगिणांदाहकस्ययतिचांद्रायणम् ॥ गंगास्नानविष्णुस्मरणत
न्नामजपादिकंसर्वप्रायश्चित्तमितिसर्वेष्टसिद्धिः ॥ श्रीनागोजीभट्टकृतंप्रायश्चित्तेंदुशेखरम् ॥ काशीनाथउपाध्यायोव्याशोधयदपूरयत् ॥ १ ॥
॥ इतिश्रीशिवभट्टसुतसतीगर्भजनागोजिभट्टकृतःश्रीमदनंतोपाध्यायसूनुकाशिनाथोपाध्यायशोधितः प्रायश्चित्तेन्दुशेखरग्रन्थःसमाप्तः ॥

॥ अथ सर्वप्रायश्चित्तप्रयोगः ॥ ॥ तत्र षडब्दत्र्यब्दसार्धाब्दादिव्यवस्थाप्राजापत्यप्रत्याम्नायाश्च परिभाषोक्ता एव ॥
तत्र त्रिंशत्कृच्छ्रमब्दम् ॥ पंचचत्वारिंशत्कृच्छ्रं सार्द्धाब्दम् ॥ नवतिकृच्छ्रं त्र्यब्दम् ॥ कृच्छ्रे प्राजापत्यमितिपर्यायौ ॥
कृच्छ्रे गवादयस्तन्निष्क्रयरजतानिष्कतदर्धतत्पादादयः प्रत्याम्नायाः ॥ तत्र सामग्र्युपकल्पनम् ॥ फलतांबूलगंधपुष्पधू
पदीपाः पंचगव्यानि मृद्भस्मगोमयदूर्वातिलाः समिद्दर्भाः होमार्थं घृतपर्षद्दक्षिणानिबंधानुवादकपूजार्थंदक्षिणापूर्वोत्तरांगगोप्रदानविष्णु
श्राद्धद्रव्यमिति ॥ ॥ अथ प्रयोगः ॥ ॥ त्र्यवरानेकंवाविप्रं पर्षत्त्वेनोपवेश्य कृतस्नानः शक्तश्चेदार्द्रवासाः कर्ता
विप्रान्प्रदक्षिणीकृत्यसाष्टांगंप्रणमेत् ॥ विप्रैः किंतेकार्यं मिथ्या मावादीः सत्यमेवदेतिपृष्टः गोवृषयोर्निष्क्रयीभूतं निष्कतदर्धतत्पादान्यत
मप्रमाणंरजतद्रव्यं सभ्येभ्यः संप्रददेनममेतिसंकल्पपूर्वकंसभ्याग्रेनिधायअमुकनाम्नोममजन्मप्रभृतिअद्ययावज्ज्ञानाज्ञानकामाकामसकृदस
कृत्कृतकायिकवाचिकमानसिकसांसर्गिक स्पृष्टास्पृष्टभुक्ताभुक्तपीता पीत सकलपातकातिपातकोपपातक—लघुपातक—संकरीकरण—मलिनीकर
णापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितपातकानांनिरासार्थंप्रायश्चित्तमुपदिशंतु भवंत इतिवदेत् ॥ पुत्रादिः प्रतिनिधि
श्चेन्ममपितुर्जन्मप्रभृतीत्यादिवदेत् ॥ श्रौतस्मार्ताधानांगेतु प्रायश्चित्तेनिरासार्थमित्यंतेअग्निपरिचरणे अधिकारार्थंच ॥ अग्निविच्छेद
प्रायश्चित्तंचोपदिशंतुभवंतइतिवदेत् ॥ तत्तदेकपापेतु किंतेकार्यमितिप्रश्नेमयाऽमुकवधः कृतः अमुकभक्षणंवाऽमुकगम्यागमनंकृतमित्यादि
प्राकृतमेवपापमुच्चार्यतत्प्रायश्चित्तमुपदिशंतुभवंत इतिवदेत् ॥ जन्मप्रभृति अद्ययावदित्यादिकंनवदेत् ॥ ततः ॥ सर्वधर्मविवेक्तारो ग

त्तारः सकलाद्विजाः ॥ ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः ॥ मयाकृतंमहाघोरंज्ञातमज्ञातांकिल्बिषम् ॥ प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥ पूज्यैः कृतः पवित्रोहंभवेयंद्विजसत्तमैः ॥ इतिप्रार्थयित्वा मामनुगृह्णंतुभवंत इतिनमेत् ॥ ततः सभ्यैः शक्त्यादिविचा र्यप्रायश्चित्तेनिश्चितेकर्ताचंदनपुष्पादिभिः पुस्तकपूजामनुवादकपूजांचकृत्वा निबंधपूजात्वेनाकिंचिद्द्रव्यंनिधायानुवादकायभृतिरूपांदक्षिणां पापानुसारेणदद्यात् ॥ ततः सभ्याः पुस्तकवाचनपूर्वकमनुवादकस्याग्रे कथयेयुः ॥ अनुवादकश्च कर्तारंवदेत् ॥ ॥ तद्यथा ॥ सभ्यै रुपदिष्टोऽनुवादकः अमुकस्यते जन्मप्रभृति अद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृत–कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभु क्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितपापा नांनिरासार्थंपर्षदुपदिष्टंसार्धाब्दप्रायश्चित्तममुकप्रत्याम्नायद्वाराप्राच्योदीच्यांगसहितंत्वया आचरितव्यं तेनतवशुद्धिर्भविष्यति ॥ त्वंकृता र्थोभविष्यसीति त्रिरुपदिशेत् ॥ आधानांगेतु सार्धाब्दप्रायश्चित्तमग्निविच्छेदप्रत्यवायानिरासार्थंविच्छेददिनादारभ्यप्रतिवर्षमेकैककृच्छ्रंचे त्यादिपूर्ववत् ॥ कर्ता ओमित्यंगीकृत्य प्रणम्यपर्षदंविसृजेत् ॥ ततोरिक्तायांसायाह्ने देशकालौसंकीर्त्यअमुकशर्मणोममजन्मप्र भृतिअद्ययावज्ज्ञानाज्ञानमध्येसंभावितानांपापानांनिरासार्थंपर्षदुपदिष्टं सार्धाब्दप्रायश्चित्तं प्राच्योदीच्यांगसहितममुकप्रत्याम्नायेनाहमाच रिष्ये ॥ आधानेतु आधानाग्निपरिचरणादिपुण्यकर्मण्यधिकारसिद्ध्यर्थंच सार्धाब्दप्रायश्चित्ते अग्निविच्छेददिनादारभ्यप्रतिवर्षमेकैक कृच्छ्रप्रायश्चित्तंच तंत्रेणप्राच्योदीच्यांगसहितममुकप्रत्याम्नायेन अहमाचरिष्यइतिसंकल्पः ॥ ततः यानिकानिचपापानिब्रह्महत्यासमा

निच ॥ केशानाश्रित्यतिष्ठंति तस्मात्केशान्वपाम्यहम् ॥ इतिमंत्रेण क्षौरंकार्यम् ॥ क्षौराभावे साद्धाब्दादिव्रतंद्विगुणंपर्षद्दक्षिणापि
द्विगुणा ॥ यत्रतु सभर्तृकस्त्रिया जीवत्पितृकादेश्चक्षौरंनिषिद्धं तत्रनाद्विगुणव्रतंक्षौरंचाशिखाकक्षोपस्थवर्जनखकेशरोम्णामुदक्संस्थंवपनं
मितिसर्वत्र ॥ रामवर्जनमप्यन्यत्र यत्रगोवधादौविशेषवचनंतत्रप्रायश्चित्तेशिखासहितमपिवपनम् ॥ प्रमादाच्छिखावपने कुशमयशिखां
ब्रह्मग्रंथियुतांदक्षिणकर्णेनिदध्यादितिकाठके ॥ शिखांछिंदंतियेमोहाद्द्वेषादज्ञानतोपिवा ॥ पुनः संस्कारमर्हंति त्रयोवर्णाद्विजातयइति
संग्रहेगृह्याग्निसागरे ॥ यज्ञोपवीतसहितशिखात्यागेपि पुनरुपनयनमेव ॥ क्रोधादिनाकेवलयज्ञोपवीतत्यागेतु प्रायश्चित्तंकरिष्येइतिसंक
ल्प्यआचार्यंवृत्वासवितारंगायत्र्यातिलैराज्येन अष्टसहस्रशतंवाजुहुयादितिप्रासंगिकम् ॥ क्षौराद्यंगजातंच कृच्छ्राधिकेभवतिनकृच्छ्रन्यूनेइ
तिमयूखादौप्राजापत्यत्रयमित्यधिकेवाप्रायश्चित्तेभवति ॥ नतुततोन्यूनइतिगृह्याग्निसागरमतम् ॥ क्षौरांतेगंडूषान्कृत्वायथोक्तदंतकाष्ठेन ॥
आयुर्बलंयशोवर्चः प्रजाः पशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणदंतशुद्धिंकृत्वा काष्ठांतरेणजिह्वामुल्लिख्यस्नात्वाभ
स्मादिदशस्नानानिकुर्यात् ॥ तत्रप्रायश्चित्तांगभस्मस्नानंकरिष्ये ॥ इतिसंकल्प्यभस्मगृहीत्वा ईशानायनमइतिशिरसिलिंपेत् ॥ तत्पुरुषा
यनमइतिमुखे ॥ अघोरायनमइतिहृदये ॥ वामदेवायनमइतिगुह्ये ॥ सद्योजातायनमइतिपादयोः ॥ प्रणवेनसर्वांगेषु ईशानादिपादोपेतैर्मं
त्रैर्वाभस्मस्नानम् ॥ ततःस्नात्वाऽऽचामेत् ॥ अथगोमयस्नानंकरिष्येइतिसंकल्प्य ॥ गोमयमादायप्रणवेनदिक्षुदक्षिणभागंतीर्थेचोत्तरभागंप्र
क्षिप्यशेषंमानस्तोकइत्यभिमंत्र्यगंधद्वारामितिमन्त्रेणअग्रमग्रंचरंतीनामितिसर्वांगमालिप्य ॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥

यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतम् ॥ तन्नइंद्रोवरुणोबृहस्पतिः सविताचपुनंतुपुनः पुनः इति
द्वाभ्यामवतेहेळइतिद्वाभ्यांससम्राजेइतिसूक्तेनचतीर्थंप्राथ्यं ॥ याः प्रवतोनिवतउद्वतइतितीर्थमभिमृश्यस्नात्वाद्विराचामेत् ॥ हिरण्यशृंग
मित्यादितीर्थप्रार्थनादिकंसर्वंदशविधस्नानांतेएव कार्यमितिमयूखे ॥ ततो मृत्तिकास्नानंसंकल्प्य ॥ अश्वक्रांते रथक्रांते विष्णुक्रांते
वसुन्धरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदेइतिमृत्तिकामभिमन्त्र्य ॥ उद्धृतासिवराहेणकृष्णेनशतवाहुना ॥ मृत्तिकेहरमेपापंयन्मया
दुष्कृतंकृतम् ॥ इतिमृदमादाय ॥ नमोमित्रस्यवरुणस्येतिसूर्यायप्रदर्श्य ॥ गंधद्वारामितिमंत्रेणवास्योनापृथिवीतिवा इदंविष्णुरितिवाशिरः
प्रभृत्यंगानिविलिप्यस्नात्वाद्विराचामेत् ॥ अथवा विस्तरेणमृत्तिकास्नानम् ॥ तद्यथा ॥ बळित्थापर्वतानामितिभूमिंप्रार्थ्य ॥ मावोरिपत्खनि
तेतिखनित्वा ॥ स्योनापृथिवीतिमृदमादाय ॥ आयनेतेइतिदूर्वामादाय ॥ गायत्र्याऽभ्युक्ष्य भूमौमृदंनिधायमृत्तिकास्नानंकरिष्येइतिसंकल्प्य ॥
मृदंकुशोदकेनप्रोक्ष्यदिक्षुक्षिपेत् ॥ तत्रमंत्राः ॥ त्रातारमिंद्रमितिपूर्वस्याम् ॥ यमायमधुमत्तमंराज्ञेइतिदक्षिणे ॥ तत्त्वायामीतिपश्चिमे ॥ वयं
सोमइत्युत्तरे ॥ तत्सूर्यरोदसीत्युपरि ॥ अधः पश्यस्वेत्यधः ॥ ततोंगेषुलेपः ॥ सहस्रशीर्षेतिशिरसि ॥ अक्षीभ्यांतेनासिकाइतिमुखे ॥ ग्रीवा
भ्यस्तइतिग्रीवायाम् ॥ आंत्रेभ्यइतिहृदये ॥ नाभानाभिन्नइतिनाभौ ॥ त्वमिंद्रसजोपसमितिवाह्वोः ॥ सोमानंस्वरणमितिकक्ष्योः ॥
यः कुक्षिरितिकुक्ष्योः ॥ बह्वीनांपितेतिपृष्ठे ॥ मेहनाद्वनंकरणादितिजान्वोः ॥ एतावानस्येतिपादयोः ॥ यस्यविश्वानिहस्तयोरितिह
स्तयोः ॥ अंगादंगादितिपुरुषसूक्तेनचसर्वांगे ॥ अथशुद्धोदकस्नानम् ॥ आपोअस्मानित्युक्त्वा सूर्याभिमुखइदंविष्णुरितिमंत्रेणप्रवा

हाभिमुखोमज्जेत् ॥ आपोहिष्ठेत्यृचेत्यन्ये ॥ अथपंचगव्यैःकुशोदकेनचेतिषट्स्नानानि ॥ तत्रादौगोमूत्रस्नानंकरिष्ये ॥ तत्सवितु
रितिगोमूत्रस्नानम् ॥ स्नात्वाऽऽचम्य ॥ एवमग्रेपि ॥ गंधद्वारामितिगोमयेन ॥ आप्यायस्वेतिक्षीरेण ॥ दधिक्राव्णइतिदधिस्नानम् ॥
घृतंमिमिक्षइतितेजोसीतिवाघृतस्नानम् ॥ देवस्यत्वासवितुःप्रसवे॰ इंद्रियेणाभिषिंचामीतिकुशोदकेनस्नानम् ॥ यद्वैतानिदशापिस्ना
नानि अमंत्रकाण्येवकार्याणि ॥ इमंमेगंगे॰सुमित्र्यान॰समुद्रज्येष्ठाइतिचातिसृभिः ॥ एतोन्विंद्रंस्तवेतितिसृभिः ॥ तरत्समंदीतिसूक्तेन
पावमानीभिरापोहिष्ठेतित्र्यृचनमार्जनंचकृत्वा ॥ इमंमेगंगेइत्युदकमालोड्यऋतंचेतितृचेनत्रिरावृत्तेनाघमर्षणंकृत्वात्रिर्द्वादशवारंवामज्जना
निकृत्वास्नानांगतर्पणंकुर्यात् ॥ अत्रप्राचीनप्रयोगेषु मृत्तिकास्नानोत्तरंमार्जनाघमर्षणोक्तिर्दृश्यते तत्रमूलंमृग्यम् ॥ दशविधस्नानप्रयोगेप्र
क्रांतस्नानत्रयांतेऽघमर्षणम् ॥ ततः सप्तस्नानानीतिक्रमस्यनियुक्तिकत्वात् ॥ सर्वदशविधस्नानांतेएवाघमर्षणतर्पणादेर्मयूखादावुक्तत्वाच्च ॥
तर्पणंयथा ॥ ब्रह्मादयोयेदेवाः ॥ तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्पयामि ॥ भुवर्देवांस्त॰ ॥ स्वर्देवांस्त॰ ॥ भूर्भुवःस्वर्देवां॰ ॥ निवीती ॥
कृष्णद्वैपायनादयोयेऋषयः ॥ तान्ऋषीन्॰ ॥ भूर्ऋषीन्॰ ॥ भुवर्ऋषीं॰ ॥ स्वर्ऋषीं॰ ॥ भूर्भुवःस्वर्ऋषीं॰ ॥ प्राची
नावीती ॥ सोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः ॥ तान्पितॄंस्त॰ ॥ भूःपितॄन्॰ ॥ भुवःपितॄन्॰ ॥ स्वःपि
तॄंस्त॰ ॥ भूर्भुवःस्वःपितॄंस्त॰ ॥ ततोयक्ष्मतर्पणादिवासःपरिधानांतेतिलकंधृत्वाआचम्यदेशकालादिसंकीर्त्यविष्णुप्रीत्यर्थंप्रायश्चित्तां
गविष्णुश्राद्धसंपत्तयेश्रीविष्णूद्देशेनत्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तामानिष्क्रयीभूतंद्रव्यंदातुमहमुत्सृजे ॥ तच्चतुर्भ्योंब्राह्मणेभ्यः पूजनपूर्वकंद

द्यात् ॥ तेनपापापहामहाविष्णुःप्रीयताम् ॥ ततःप्रायश्चित्तपूर्वांगगोदानंकरिष्यइतिसंकल्प्य ॥ गवामंगेष्वितिगोदानंप्रत्यक्षंद्रव्यद्वारावाकुर्यात् ॥ देशकालौसंकीर्त्यप्रायश्चित्तपूर्वांगहोमंकरिष्ये ॥ तदंगतयास्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनादिकरिष्ये ॥ विटनामानमग्निंप्रतिष्ठापयामीत्यंतेध्यात्वाप्रायश्चित्तपूर्वांगहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ चक्षुषीआज्येनेत्यंतेअग्निंवायुंसूर्यंप्रजापतिंचप्रतिदैवतंसप्तविंशतिसंख्याकाज्याहुतिभिः पृथिवींविष्णुंरुद्रंब्रह्माणमग्निंसोमंसवितारंप्रजापतिमग्निंस्विष्टकृतं पंचगव्येन शेषेण स्विष्टकृतमग्निमिध्मसन्नहनेन रुद्रमित्यादि । यद्वा । आज्येनेत्यंतेपापापहमहाविष्णुंव्याहृतिभिरष्टोत्तरशतसंख्याऽऽज्याहुतिभिः शेषंसमानम् ॥ आज्यसंस्कारकाले पंचगव्यंकृत्वाआज्येनसहपर्यग्निकुर्यात् ॥ ताम्रादिपात्रे पलाशादिपत्रपुटेवाताम्रागोर्मूत्रंत्रिपलमष्टमाषंवागायत्र्यादायश्वेतगोःशकृत्षोडशमाषंगंधद्वारामित्यादाय पीतगोः क्षीरं कापिलंवा सप्तपलंद्वादशमाषंवा आप्यायस्वेत्यादाय ॥ नीलायाःसप्तपलंदशमाषंवा दधिदधिक्राव्णेत्यादाय कृष्णाया घृतमेकपलमष्टमाषंवा शुक्रमसिज्योतिरसितेजोसीतिवाघृतंमिमिक्षइतिवाऽऽदाय यथोक्तगोरभावे गोमात्रस्य मूत्रादिग्राह्यम् ॥ देवस्यत्वेतिकुशोदकमेकपलंचतुर्माषंवाप्रक्षिप्यप्रणवेनयज्ञियकाष्ठेनालोड्यप्रणवेनाभिमंत्रयेत् ॥ आज्यपंचगव्यासादानादि आज्यभागांते भूःस्वाहाअग्नयइदम् ॥ भुवःस्वाहावायवइदम् ॥ स्वःस्वाहासूर्यायेदम् ॥ भूर्भुवःस्वःस्वाहा प्रजापतयइदम् ॥ इत्याज्यस्यप्रतिदैवतंसप्तविंशतिरित्येवमष्टोत्तरशताहुतीर्हुत्वा ॥ विष्णुपक्षे ॥ भूःस्वाहाविष्णवइदम् ॥ भुवःस्वाहाविष्णवइदम् ॥ स्वःस्वाहाविष्णवइदम् ॥ भूर्भुवःस्वःस्वाहाविष्णवइदम् ॥ इतिअष्टोत्तरशताहुतीर्हुत्वा पंचगव्यहोमः ॥ ततःसाग्रैःसप्तपत्रकुशैःपंचगव्यंगृ

हुत्वा ॥ इरावतीधेनुमती० स्वाहापृथिव्याइदं० ॥ १ ॥ इदं विष्णु० विष्णवइदं० ॥ २ ॥ मानस्तोके० रुद्रायेदं० ॥ ३ ॥ ब्रह्मजज्ञा
नं० ब्रह्मणइदं० ॥ ४ ॥ ब्रह्मस्थानेशन्नोदेवीतिमंत्रेणअद्भ्यइतिकेचित् ॥ अग्नयेस्वाहाअग्नयइदं० ॥ ५ ॥ सोमायस्वाहासोमायेदं० ॥
॥ ६ ॥ तत्सवितुर्वरेण्यं० सूर्यायेदं० ॥ ७ ॥ प्रजापतेनत्व० व्याहृतीभिर्वा ॥ ८ ॥ ॐस्वाहाप्रजापतयइदं० ॥ ९ ॥ अग्नयेस्विष्टकृ
तेस्वा० अग्नयेस्विष्टकृतइदं० ॥ १० ॥ इतिदशपंचगव्याहुतीर्हुत्वाकेवलाज्यस्य ॥ यदस्येतिस्विष्टकृतंहुत्वाप्रायश्चित्तहोमशेषंसमाप्य ॥
व्रतग्रहणंकरिष्येइतिद्विजान्पृष्ट्वाकुरुष्वेत्यनुज्ञातः ॥ यत्त्वगस्थिग० ॐप्रणवेनगृहीत्वाप्रणवेनैवसर्वंपंचगव्यंपिबेत् ॥ अशक्तौगोमूत्राद्यल्पं
ग्राह्यम् ॥ सर्वस्यपेयत्वात् ॥ एतच्चग्रामाद्बहिर्नद्यादेस्तीरेनक्षत्रदर्शनेकार्यम् ॥ व्रतंनिशामुखेग्राह्यंबहिस्तारकदर्शनइतिस्मृतेः ॥ मुमू
र्षोस्तुगृहादावेवास्मिन्दिनउपवासः अशक्तौहविष्याशनम् ॥ अयंचपंचगव्यस्यदशाहुतिहोमोब्रह्मकूर्चाख्यपंचगव्यपानेसर्वत्रोह्यः ॥
गृहमागत्यप्रातरारभ्यसंकल्पितप्रायश्चित्तंसंकल्पप्रत्याम्नायानुसारेणानुष्ठायोत्तरांगानिकुर्यात् ॥ गोनिष्क्रयरजतादिदानपक्षेपंचग
व्यप्राशनांतेइदंसार्द्धाब्दंपंचचत्वारिंशत्कृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतंप्रतिकृच्छ्रंनिष्कतदर्धतदर्धान्यतमप्रमाणरजतद्रव्यं नानानामगोत्रे
भ्योब्राह्मणेभ्योदातुमहमुत्सृजे ॥ इतिद्रव्यदानसंकल्पंकृत्वातद्देवद्रव्यंविभज्यदत्त्वाचोत्तरांगानिकुर्यात् ॥ आचीर्णस्यामुकप्रायश्चित्तस्यसांग
तार्थमुत्तरांगानिकरिष्ये ॥ तत्रहोमंकर्तुंस्थंडिलादिकरिष्येइतिसंकल्प्यपूर्ववदाज्यहोममात्रंव्याहृतिभिःकृत्वापूर्ववद्देवविष्णुश्राद्धंगोदानंचकु
र्यात् ॥ नात्रपंचगव्यहोमः ॥ अंतेशक्तेनगोभूहेमादिदशदानानिकार्याणि ॥ अशक्तौहिरण्यदानम् ॥ गृह्याग्निसागरेतस्मिन्नेवादिनेउत्तरांग

पृथक्प्रयोगोवेतिविचारणीयम् ममतुपृथगग्निकरणादियुक्तंभाति ॥ कौस्तुभेपू
होमश्चतस्मिन्नेवाग्नौकार्यइत्येतावन्मात्रमुक्तंतत्रतंत्रप्रयोगः ॥ तत्पक्षआधानांतेऽन्वाधानपरिसमूहनपरिस्तरणपर्युक्षणाज्यपंचगव्यसं
वोत्तरांगयोरिध्माधानादिस्थालीपाकतंत्रंकृताकृतमित्युक्तम् ॥ परिस्तरणंविमोकादिः ॥ ॥ इतिकाशीनाथोपाध्या
स्कारस्रुवसंमार्गार्चनांतहोमः ॥ होमांतेस्विष्टकृत्सप्तप्रायश्चित्ताहुतयश्चकृताकृताः ॥ ॥ स्त्रीणांहोमःकृताकृतः ॥ करणपक्षेविधवायाः
यविरचितःसार्धाब्दादिसर्वप्रायश्चित्तप्रयोगः ॥ ॥ अथविप्रस्त्रियाःप्रायश्चित्तप्रयोगः ॥ ॥ वस्त्रपरिधानांतेविष्णुश्राद्ध
क्षौरांतेपूर्ववत्कृत्वाअमंत्रकाणिदशस्नानानि ॥ सधवायास्तुसंकल्पांतेदंतधावनंकृत्वातूष्णींदशस्नानानि ॥
गोदानेकृत्वाप्रायश्चित्तहोमार्थमाचार्यत्वांवृणे ॥ इतिविप्रंवृत्वापूर्ववद्विप्रद्वारासर्वंपूर्वांगंकारयित्वास्वयंपंचगव्यंतूष्णींप्राश्यमुख्यप्रत्याम्नाय
द्रव्यंविसृज्योत्तरांगानिकारयेत् ॥ होमाभावपक्षेदशविधस्नानांतेविष्णुश्रद्धागोदानेकृत्वाविप्रेणपंचगव्यंकारयित्वातूष्णींप्राश्यप्रायश्चित्त
द्रव्यंसंकल्प्यदत्त्वोत्तरांगविष्णुश्राद्धगोदानदशदानानिकुर्यात् ॥ अथशूद्रस्यसंकल्पांतमविकृतंप्राग्वत् ॥ ततःक्षौरांतेअमंत्रकदशस्ना
नानिवस्त्रतिलकधारणांतेविष्णुश्राद्धगोदानेकृत्वाविप्रद्वारापंचगव्यंकारयित्वास्वयंतूष्णींपिबेत् ॥ शूद्रेणकपिलायाःपंचगव्यानिनपेयानि ॥
नास्यविप्रद्वारापिहोमःप्रायश्चित्तद्रव्यंसंकल्प्यदत्त्वाउत्तरांगविष्णुश्राद्धगोदानानिदशदानानिकुर्यात् ॥ इति स्त्रीशूद्रप्रयोगः ॥ अथ
गोवधाद्येकैकपापेप्रायश्चित्तप्रयोगः ॥ पर्षदंप्रदक्षिणीकृत्यसाष्टांगंप्रणमेत् ॥ विप्रैःकिंतेकार्यमित्यादिपृष्टेगोवृपनिष्क्रयंसंकल्प्यनिधायम
याऽमुकगोवधः कृतोऽथवापलांडुगृंजनादिभक्षणंकृतंयद्वाऽमुकस्त्रीगमनंकृतंतत्प्रायश्चित्तमुपदिशंतुभवंतः ॥ इतियथापापमुच्चार्यस्पष्टंवदेत् ॥

ततः सर्वेधर्मविवेक्तारइत्यादिकर्त्रांनिबंधपूजाऽनुवादकपूजनेकृतेसभ्यानुवादकमुखेनप्रायश्चित्तंकथयेयुः ॥ त्वयाऽमुकगोवधःकृतस्तत्प्रायश्चित्तंत्रैमासिकव्रतंसप्तदशप्राजापत्यप्रत्याम्नायद्वारावासप्तदशगोदानतन्मूल्यदानेनवापूर्वोत्तरांगसहितंत्वयाऽऽचरितव्यं तेनतवशुद्धिर्भविष्यतीत्यादि ॥ यद्वा त्वया मत्याऽभ्यासेन पलांडुगृंजनंकुक्कुटमांसंवाभक्षितंतत्प्रायश्चित्तंयतिचांद्रायणंपुनःसंस्कारसहितंप्राच्यादीच्यांगसहितमाचरणीयंतेनतवशुद्धिर्भविष्यतीत्यादि ॥ एवमगम्यागमनादावूह्यम् ॥ ततःकर्तादेशकालौसंकीर्त्यपर्षदुपदिष्टंगोवधप्रायश्चित्तंत्रैमासिकममुकप्रत्याम्नायेनप्राच्योदीच्यांगसहितमहमाचरिष्ये ॥ ततोवपनदंतधावनदशविधस्नानपूर्वांगविष्णुश्राद्धगोदानाज्यहोमपंचगव्यप्राशनांतंयथासंकल्पितंमुख्यप्रायश्चित्तंकृत्वोत्तरांगानिकुर्यात् ॥ इदंसामान्यम् ॥ ततोविशेषोक्तस्वामिमतेगोदानपार्वणश्राद्धादि ॥ एवमभक्ष्यभक्षणेपिपलांडुगृंजनकुक्कुटमांसादिभक्षणजनितपातकनिरासार्थंपर्षदुपदिष्टं पुनः संस्कारसहितं यतिचांद्रायणममुकप्रत्याम्नायेन प्राच्योदीच्यांगसहितमाचरिष्ये इतिसंकल्प्यक्षौरादिपंचगव्यप्राशनादिपूर्ववत्कृत्वा चांद्रायणप्रत्याम्नायपुनरुपनयनंचकृत्वोदीच्यांगानिकुर्यात् ॥ एवमगम्यागमनादौद्रष्टव्यम् ॥ रहस्यप्रायश्चित्तंतुनपर्षदुपस्थानंसभ्यानुवादकपूजनादिकम् ॥ किन्तुतत्प्रायश्चित्तंस्वयमेवज्ञात्वाऽथवाऽन्याजांतरेणाकिंचित्पृष्ट्वारहस्योक्तंप्रायश्चित्तंस्वयमेवरहसिसंकल्प्यमहच्चेत्क्षौरसहितमन्यथाक्षौररहितमाचरेदिति ॥ ॥ इतिश्रीमदनंतोपाध्यायसूनुकाशीनाथोपाध्यायविरचितसर्वप्रायश्चित्तप्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

इदंपुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णोः अध्यक्ष "लक्ष्मीवेंकटेश्वर" मुद्रणालये पंडित--शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं मुद्रयित्वा प्रकाशितम्। संवत् १९७९ शके १८४४।

पुस्तकें मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेङ्कटेश्वर " स्टीम् प्रेस,
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास,
" श्रीवेङ्कटेश्वर " स्टीम् प्रेस,
खेतवाडी-मुंबई.

## अत्रेयमभ्यर्थना ।



अत्रास्माकं मुद्रणालये ऋगादयो वेदा उपनिषदो वेदान्तग्रंथा महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः, काव्य-नाटक-चम्पू-प्रभृतयो ग्रंथाः, सहस्रनामाद्यनेकस्तोत्रग्रन्थाः, विविधभाषाग्रन्थाश्च सीसकोच्चममहल्लघ्वक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

गंगाविष्णु-श्रीकृष्णदासः-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-मुद्रणालयाध्यक्षः-कल्याण-मुंबईस्थः ।

